SRI VENKATESVARA ORIENTAL SERIES—No. 28

Editor:—PROF. P. V. RAMANUJASWAMI, M.A.

# NIPATAVYAYOPASARGAVRITTI

OF

TILAKA

EDITED BY

APPALLA SOMESVARA SARMA, Vidya Pravina, P.O.L.

VYAKARANA LECTURER

*Sri Venkatesvara Oriental College. Tirupati*

PUBLISHED UNDER THE AUTHORITY OF

SRI C. ANNA RAO, B.A.

EXECUTIVE OFFICER

*T. T. Devasthanams on behalf of the Board of Trustees*




PRINTED AT

TIRUMALA-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI

1951

श्रीवेङ्कटेश्वरप्राच्यग्रन्थावली. सं. २८
सम्पादकः – श्रीपरवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.

श्रीः

श्रीनिवासो विजयते

# निपाताव्ययोपसर्गवृत्तिः

तिलककृतिः

श्रीवेङ्कटेश्वरप्राच्यमहाविद्यालयव्याकरणोपाध्यायेन
"व्याकरणसाहित्यविद्याप्रवीणा" द्युपाधिभाजा
कौत्सेन अप्पल्ल सोमेश्वरशर्मा, P.O.L. इत्यनेन
सविशेषं परिष्कृता

तिरुपति
तिरुमलै - तिरुपति देवस्थानमुद्रणालये
मुद्रिता
१९५१.

श्रीः

# उपोद्धातः ।



कृतिरियं श्रीवेङ्कटेश्वरप्राच्यमहाविद्यालयकुलपतिभिः **श्रीमत्परवस्तु वेङ्कट-रामानुजस्वामिभिः** संपादिता । न्यवसच्चेयं दीर्घकालं संपादकानां पितामहैः पूज्यपादैः कविपण्डितसार्वभौमैः कीर्तिकायैः महामहोपाध्यायैः **श्रीमत्परवस्तु वेङ्कटरङ्गाचार्य**महाशयैः प्रतिष्ठिते आर्षज्ञाननिलयभूते "आर्षग्रन्थालय" नाम्नि पुस्तकभाण्डागारे । विशाखपट्टणस्थमिदं पुस्तकागारं निधिनिभं बहूनि उत्तमानि अपूर्वाणि ज्ञानविज्ञानदायकानि संस्कृतान्ध्रमयानि ग्रन्थरत्नानि लोकाय पूर्वं व्यतरत्—अद्य वितरति—उत्तरत्र वितरिष्यति चेति विदितचरमेवेदं ज्ञानां समेषाम् । तादृशेषु रत्नेषु अन्यतममिदं कृतिरत्नं एतर्हि श्रीमतां संपादकानां श्रद्धावशात् अभिव्यक्तमिति महदिदं प्रमादस्थानम् ।

अद्ययावत् अयं ग्रन्थः न कुत्राऽपि प्रकाशितपूर्व इति च अपरं प्रमोदास्पदम् । अस्य प्रतिकृतिस्तावत् आन्ध्रलिप्यां क्रीस्तुशकीये १९११ (1911 A. D.) वत्सरे लिखिता विराजते । संपादकानामग्रजैः **श्रीमत्परवस्तु वेङ्कटरङ्गनाथ-स्वामि**महोदयैरेषा समलेखि । अस्यां ग्रन्थतत्कर्तृविषयकं चरितं लेशतोऽपि नोट्टङ्कितम् । केवलमादितः प्रभृति आन्तं ग्रन्थ एव संकलितः । अतो ग्रन्थाऽगमादिविषयके चरितज्ञाने वयं सहायशून्याः जाताः स्मः । प्रतिकृत्यन्तरस्य कुत्राऽपि अनुपलम्भाच्च विमर्शस्य संवादस्य वा अवकाशः सुतमां नाजनि ।

ग्रन्थममुं संपादकाः निरवधिकेन वात्सल्येन अन्तेवासिने मह्यं परिष्कारार्थमदुः । यथाशक्ति ज्ञानलेशेन अहमिमं पर्यष्कार्षम् । प्रतिकृतौ तत्रतत्र लेखने साङ्कर्यमवर्तत । पौर्वापर्यं क्वचिन्नष्टम् । अवान्तरविभागादिकमपि कुत्रचित् न अवालम्बि । एतदादिकं सर्वं मर्यादामनतिक्रम्य मया सुष्ठु संकलितम् । तत्रतत्र ग्रन्थोऽपि ईषल्लुप्तः । तादृशो भागः प्रायेण तथैव विसृष्टः । यत्र यत्र अर्थविषये विषयान्तरे वा संशयादिकं जायते तत्रतत्र कुण्डलीकरणप्रभृतिचिह्नाङ्कनादिना सर्वं

पाठकसौलभ्यार्थं सूचितं वर्तते । यथावसरं पुटानामधस्तात् विवरणकमपि संनिवेशितम् । मात्रामात्रमपि कल्पना न मया कृतेति तु विभावयेत ।

"निपाताव्ययोपसर्गवृत्तिः" इति नाम्नैव अतीव प्रकटं भवति यदत्र निपातानामव्ययानामुपसर्गाणाञ्च व्याख्यानं विद्यते इति । ग्रन्थेऽस्मिन् काण्डत्रयं वर्तते । निपातकाण्डम्, अव्ययकाण्डम्, उपसर्गकाण्डम्, इति च यथाक्रमं काण्डानां नामधेयानि । प्रथमद्वितीये काण्डे सूत्रतद्व्याकृतिरूपेण तृतीयकाण्डं पद्यतद्विवरणरूपेण च देदीप्यते । सर्वत्राऽपि अल्पाल्पा विवृतिः लौकिकवैदिकसाधारणानि उदाहरणानि च संगृहीतानि वरीवृतति । रीतिरियमपूर्वा सर्वसुलभा तलस्पर्शिनी चेति नाऽस्ति अत्र विचिकित्सा । ईषद्वैषम्येण द्विशतं निपातानां सार्धद्विशतमव्ययानां द्वाविंशतिश्च उपसर्गाणामत्र व्याकारि । प्रसङ्गवशात् उपसर्गकाण्डान्ते काश्चन गतयोऽपि प्रदर्शिताः । परंतु गत्यर्थं पृथग् विभागः न कल्पितः ।

वृत्तेश्च अस्याः प्रणेता "तिलकः" इति "निजकुलतिलकास्तिलकस्तिलकयति निदर्शनैरेव" इति ग्रन्थादिवचनेन "इति निपाताव्ययोपसर्गवृत्तौ तिलककृतायाम्" इत्यादिकाण्डान्तगद्येन च अवगम्यते । परमत्र एको विशेषः प्रतिभाति । तथाहि—"क्षीराब्धिप्रसृताव्ययरत्नमालया विदुषः" इति ग्रन्थारम्भपद्ये भासमानेन श्लेषेण "भट्टक्षीरस्वाम्युत्प्रेक्षितनिपाताव्ययोपसर्गीये" इत्यादि तृतीयकाण्डान्ते भासमानेन गद्येन च भट्टः क्षीरस्वामी प्रकृतांशे तिलकस्य अवलम्बो बभूवेति निश्प्रचं विज्ञायते इति । संदर्भे अस्मिन् एकः संशयोऽपि विमर्शकानां हृदि उत्पद्येत । "किमत्र मूलं क्षीरस्वामिना विरचितं स्यात्?" इति । "वृत्तिः" इति ग्रन्थाभिख्याऽपि अंशे अस्मिन् साधिका संपद्यते किल । इदमत्र समाधेयम् । क्षीरस्वामिविरचिताममरसिंहकोशव्याख्यामवलम्ब्य तिलकेनैव सर्वं प्रणीतं भवेत् । कृतज्ञता च पूर्वोक्तरीत्या सूचिता स्यात् इति । इतोऽधिकं विमर्शकर्दमे अवसादस्तु संग्रहाभिलाषिभिरस्माभिः उपेक्षितः ।

नामलिङ्गानुशासनव्याख्यातृषु अतीव प्रसिद्धः क्षीरस्वामीतु एकादशे क्रीस्तुशताब्दे अवर्तत इति चरितज्ञानामाशयः । अतः क्षीरस्वामिनः परः तिलकः एका-

दशक्रीस्तुशताब्दात् परएवेत्यत्र न कोऽपि विशयलेशः। यस्य कस्याऽपि साधनस्य अनुपलम्भात् ग्रन्थकर्तृविषये एतदपेक्षया न एकमपि पदं पुरः प्रक्षेप्तुं उत्सहामहे। यदि केऽपि चरितपरिशोधकाः तिलकचरितं आविष्कुर्युः तर्हि तान् प्रति कृतज्ञाः भवेम। अयं तु आस्माक आन्तर आशयः — "सुश्लिष्टां सूत्ररचनां मृदुमधुरां विवृतिं लोकवेदसाधारणानि उदाहरणानि च पश्यद्भिः नूनमयं तिलकः यः कोऽपि प्राचीन एव वैयाकरणकुलतिलको भवेदिति अनुमातुं शक्यते,' इति।

कृतिरत्नमिदं पार्थक्येन निपाताव्ययोपसर्गविषये सकलसंशयापनोदकत्वात् साधुप्रयोगबोधकत्वाच्च गीर्वाणभाषाभिलाषिणामतीव उपयुज्यत इति सुदृढं विश्वसिमः। एतादृशं निगूढं रत्नं कलयतां संपादकानां प्रकाशयतां श्रीवेङ्कटेश्वरदेवस्थानाधिकृतानां च औदार्यं विबुधश्लाघ्यं विलसतीति अन्ततो वक्तव्यं प्रधानं वचः।

दोषज्ञाः यद्यत्र मदीये परिष्कारादिके कर्मणि दोषान् पश्येयुः तर्हि कृपया क्षन्त्वा स्वीयां गुणज्ञतामेव प्रकटयितुमर्हन्तीति सप्रश्रयं विज्ञापयामि॥

श्रीवेङ्कटेश्वरप्राच्य-
महाविद्यालयः,
**तिरुपति**
१५–११–१९५१.

इति
विज्ञापयिता विबुधविधेयः
**अप्पल्ल सोमेश्वरशर्मा**, P. O. L.,
व्याकरणसाहित्यविद्याप्रवीणः। व्याकरणाचार्यः॥



# विषयसूचिका

---



---

श्रीः

श्रीवेङ्कटेशो विजयते ॥

ओँ श्रीगुरवे सरस्वतीरूपाय नमः ॥

नमो विघ्नहर्त्रे ॥

नमः सूर्यादिभ्यो नवग्रहेभ्यो नमः ॥

# ॥ निपाताव्ययोपसर्गवृत्तिः ॥



## [ प्रथमं निपातकाण्डम् । ]

श्लो:-नत्वेशं क्षीराब्धिप्रसृताव्ययरत्नमालया विदुषः ।
निजकुलतिलकस्तिलकस्तिलकयति निदर्शनैरेव ॥

**द्योतकाः निपाताः ॥ १ ॥**

नामाख्यातयोर्धर्ममात्रव्यञ्जकाः । अत ऊर्ध्वं चादयो निपाता अधिक्रियन्ते । यतः ।

प्रायशो द्योतकाश्चाद्या निपाता द्रव्यवृत्ति तु ।
स्वराद्यमव्ययं प्राद्या न धात्वर्थविशेषकाः ॥ १ ॥

कर्मप्रवचनीयास्तु क्रियासंबन्धभेदकाः ।
ऊर्याद्या गतयो वृत्तौ कार्यार्थं सर्वमव्ययम् ॥ २ ॥

किंच ।

इयन्त इति संख्यैषामर्थेयत्ता च नास्ति वै ।
प्रयोजनवशादेत्य निपतन्ति परे पदे ॥ ३ ॥

**च समुच्चयान्वाचयतुल्ययोगिताहेतुषु ॥ २ ॥**

समुच्चये—- गार्ग्यो वात्स्यश्चागतौ । पचतिच पठति च चैत्रः । समाहारेतरेतरयोगविनियोगास्समुच्चय एव । अनेकस्यैकत्र प्रचयात् । गार्ग्यवात्स्यावहं त्वंच वृत्र-

हन् ॥ अन्वाचये — भिक्षामट गाञ्चानय । गवानयनमत्राऽप्रधानम् । तुल्ययोगितायाम् — ध्यातश्चोपस्थितश्च । हेतौ — ग्रामो न गन्तव्यः शीतं च । शीतात् कथं गच्छामीत्यर्थः ॥ पूरणेऽप्याहुः । यथा — भीमः पार्थस्तथैवच । रात्रौ नैवच नैवच । चोयद्यर्थे ॥ त्वं चागमिष्यसि कृतार्थाः स्मः । त्वं यद्यागमिष्यसीत्यर्थः । कारुः कुविन्दश्च । यद्यर्थ इति विशेषार्थः ॥

## वा विकल्पोपमानद्वन्द्वसमुच्चयेषु ॥ ३ ॥

विकल्पे — यवैर्वा व्रीहिभिर्वा यजेत । उपमायाम् — आशीविषो वा संक्रुद्धः सूर्यबाऽत्र विनिर्गतः । भीमोन्तको वा समरे गदापाणिरदृश्यत । द्वन्द्वे — सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम । नतृतीयेत्यर्थः । समुच्चये — वायुर्वा त्वा मनुर्वा त्वा ॥

## अह क्षिपादेशयोः ॥ ४ ॥

क्षिपायाम् — स्वयमहाऽश्वेन याति गुरुं पदातिं गमयति । आदेशे — अयमहाऽरण्यं यातु ॥ प्रशंसायामप्याहुः । अह बालो वक्ति । उत्कृष्टं वक्तीत्यर्थः ॥

## ह आगमे च ॥ ५ ॥

आगमे — इति हस्माहुः । क्षिपायाम् — स्वयं ह ओदनं भुङ्क्ते गुरुं सक्तून् पाययति । आदेशे — त्वं ह ग्रामं गच्छ (सि?) । निन्दायामप्याहुः । त्वं ह ब्राह्मण । त्वमपि किं ब्राह्मण इत्यर्थः ॥

## एवावधारणनियोगयोः ॥ ६ ॥

अवधारणे — त्वमेव देव जानासि । नियोगे — अद्यैव आवां रणमुपागतौ । अनवक्लृप्तावप्याहुः । चैत्र क्वेव भोक्ष्यसे ॥

## एवं निश्चयाङ्गीकारप्रकारप्रकृतपरामर्शोपदेशनिर्देशेषु ॥ ७ ॥

निश्चये — एवमित्थं यथात्थ त्वम् । अङ्गीकारे — एवं कुर्मः । प्रकारे — यथाग्निरेवं विप्रः । प्रकृतपरामर्शे — एवं वादिनि देवर्षौ । उपदेशे — एवं पठ । निर्देशे — एवं तावत् ॥

## नो निषेधे ॥ ८ ॥

नो जानीमः ॥

## न नकिरुपमानेऽपि ॥ ९ ॥

उपमाने —मृगो न भीमः कुचरो गिरिष्ठः । मृग इव भीम इत्यर्थः । मेघो नकिर्वर्षसि (हेमराजा ?)ः (हेमराशिम् -- यद्वा -- हेमराजिम्)। मेघ इवेत्यर्थः । निषेधे— नान्तरीयकत्वात् । ञित्त्वाभावात् नञ्समासाभावे नलोपो नास्ति । मूको नकिर्वक्ति हि प्रेम्णा निमित्तेसतीति । द्वौ भिन्नार्थौ ॥

## नञ् तुल्यान्यविरुद्धाभावेषदर्थेषु ॥ १० ॥

तुल्ये-- अब्राह्मणमानय । ब्राह्मणसदृशं क्षत्रियादिमित्यर्थः । अन्यार्थे— अनग्निर्जलम् । विरुद्धे -- अधर्मः पापम् । अनर्थः । अभावे अभावो मक्षिकानां अमक्षिकं वर्तते । ईषदर्थे— अल्पघोषाः = अघोषाः । अवक्षेपो विरोध एव । अपचसि जाल्म । अन्नं पक्तुं न जानासीत्यर्थः। अकारो नञिति विशेषणार्थः । अकारो निषेधे । स्वरप्रतिरूपत्वात् । अविप्र इव भाषसे । विप्रवन्नवक्षीत्यर्थः । अन्योन्येऽप्याहुः । अनुपमः ॥ (?)

## माङ्मास्ममाकिर्वारणे ॥ ११ ॥

माकार्षीः । मास्म करोति (तु?) । रक्षा माकिर्नो अघशंस ईशत । नः = अस्माकम् । रक्षाः = राक्षसाः । अघशंसः = पापिष्ठाः । माकिरीशत = माप्रभवन्त्वित्यर्थः । ङकारो माङि लुङिति विशेषणार्थः ॥

## मा शङ्कायां च ॥ १२ ॥

शङ्कायाम्— अत्याकृष्टम्........? (धनुर्मा) माऽत्वाडित। मा करिष्यति साहसम् । वारणे— मा पिब ॥

## नेत् शङ्कायाम् ॥ १३ ॥

नेज्जिह्मयन्तो नरकं पताम । कदाचित् पापाचारा निरयं गच्छामेत्यर्थः ॥

**चेद्यदीत्थं वारणोपदेशे ॥ १४ ॥**

सचेद्व्याधीयेत गुरोरुच्छिष्टं भुञ्जीत । यदि सर्वमनित्यमिदं नभवेदिह जन्मनि कस्य रतिर्नभवेत् । सविद्वानित्थं पूज्यः ॥

**नूनं निश्चयवितर्कयोः ॥ १५ ॥**

निश्चये — नूनं हन्ताऽसि वारणम् । वितर्कः संभावनाप्रत्ययः । नूनं (शूरत् ?) शरत्फुल्ला हि काशाः ॥

**कच्चित् कच्चन इष्टप्रश्ने ॥ १६ ॥**

कच्चिज्जीवति मे माता । स्नासि कच्चन जाह्नवीम् ॥

**हन्त वाक्यारंभनिश्चयखेदसंप्रदानेषु ॥ १७ ॥**

वाक्यारम्भे— हन्त ते कथयिष्यामि । निश्चये— हन्त जीविताः स्मः । खेदे— हन्त ताः पथिकगेहिन्यः । संप्रदाने— व्ययमिदं मनुष्येभ्यो हन्त ॥

**वा अवधारणे ॥ १८ ॥**

अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः । अशरीरमेव सन्तमित्यर्थः ॥

**स्वाव स्वै विशेषे ॥ १९ ॥**

सर्वे इमे विद्वांसः, अयं स्वाव मूर्खः । वर्णानां (विप्रस्वै ?) विप्राः स्वै प्रकृष्यन्ते ॥

**वै नियोगागमयोश्च ॥ २० ॥**

नियोगे— वेदो वै धर्ममूलम् । आगमे—शतायुर्वै पुरुषः । विशेषे- बृहस्पतिर्वै देवानां पुरोहितः ॥ पूरणेऽप्याहुः । यो वै युवाऽप्यधीयानः ॥

**तु हेतुविशेषावधारणव्यावृत्तिषु ॥ २१ ॥**

हेतौ— गृह्णीयां वेदं दुर्ज्ञानं तु । दुर्ज्ञानत्वात् कथं गृह्णीयामित्यर्थः । विशेषे— क्षीरान्मांसं तु पुष्टिकृत् । अवधारणे— दुर्योधनस्तु कुरूणां पापः ।

व्यावृत्तौ— अहं भुञ्जामि (?) त्वं तु किं करिष्यसि ॥ पूरणेऽप्याहुः । आख्यास्यामि तु ते तत्त्वम् । अयं तु वै मूर्ख इति । द्वौ स्वार्थे ॥

## नु न्वै स्विद्वितर्के ॥ २२ ॥

को नु धावति । को न्वै राजा को न्वै मन्त्री । अधः स्विदासीदुपरि-स्विदासीत् । कः स्विदेकाकी चरतीति प्रश्ने वितर्कोऽस्त्येव । अहिर्नुकिं रज्जुर्नु किमित्यादौ किमनर्थकम् । किंनु वै जृम्भते कलिरिति । द्वौ स्वार्थे ॥

## हरे अनादरे ॥ २३ ॥

हते भीष्मे हते द्रोणे किं हरे त्वं करिष्यसि ॥

## अथ आत् प्रश्नाधिकारानन्तर्यप्रतिज्ञासमुच्चयेषु ॥ २४ ॥

प्रश्ने— अथ शक्तोऽसि भुवं भोक्तुम् । अथ धावसि पर्वते । विश्व-कर्मा विमना आत् विहायाः । अधिकारे— अथातो धर्मजिज्ञासा । अथ स्नान-विधः । आत् क्रतून् वर्तयिष्यामः । आनन्तर्ये:—स्नातोऽथ भुङ्क्ते । अथ शोद्धुं-प्रवृत्तः । आदिरुद्द्यावापृथिवी अप्रथेताम् । अनन्तरं रोदसी प्रथित इत्यर्थः । इर्नि-रर्थकम् । प्रतिज्ञायाम्— गौडो भवानथेति ब्रूमः । बाढं गौडोऽसीत्यर्थः । युध्ये-ऽथ योधैः । आत् सोऽस्मि काश्यपः सोद्यमः । समुच्चये — भीमोऽथार्जुनः । दुर्योधनोऽथ राधेयः । अङ्गिरादुपमन्युरात् । ऋतौ व्यवेयादथाऽनृतौ पर्ववर्ज-मिति विकल्पः समुच्चय एव ।

## अथो प्रकृत्यधिक्रियास्थापनान्वादेशेषु ॥ २५ ॥

प्रकृतौ — अथो यदुत्सृष्टमस्ति तद्दास्यति । अधिक्रियायाम्— अथो परोक्षं कुर्यात् । समुच्चयेऽप्यधिक्रियागर्भत्वात् । अथो खल्वाहुः । आहुश्चेत्यर्थः । स्था-पने— अथो वर्णानां संस्कारः । अन्वादेशे— अमुं वेदमध्यापय अथो एवं शिक्षामध्यापय । अथोकथितं नु कथमन्वादेश इति पक्षान्तरेऽपि सिद्धम् । (?) नदीषु स्नायादथो देवखातेषु ।

## अलं भूषणपर्याप्तिवारणेषु ॥ २६ ॥

अलंकृत्य । भूषणे । अलं मल्लो मल्लाय । पर्याप्तौ । अलमतिप्रसङ्गेन । निषेधो वारणमेव । आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् । अस्यालापस्य वारणं भवत्वित्यर्थः । अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥

## चिच्चन असाकल्योपमानासम्मतिषु ॥ २७ ॥

असाकल्ये — किंचिद्ब्रूते । किंचन याति । उपमायाम् — अग्निश्चिद्भवान् । अग्निरिव देदीप्यत इत्यर्थः । असम्मतौ — कुल्माषांश्चिदाहर, बुसंचनाहर । न युक्तमेतदित्यर्थः । असाकल्ये प्रायः किंवृत्तात् परौ । कदाचित् । कथंचित् । कर्हिचित् । क्वचित् । कुतश्चित् । एवं कदाचनादिषु विस्मयादिप्रतीतिः । समुदायाद्विस्मयादिप्रतीतिः । याचिता नैव कुप्यन्ति पुरुषाः केचनैव ते ॥

## हि स्फुटार्थहेत्वोः ॥ २८ ॥

स्फुटार्थे — कोह्यबालिशो हस्तगतं पदगतं कुर्यात् । हेतौ — अग्निरत्राऽस्ति, धूमो हि दृश्यते ॥ पूरणे प्रत्युक्तौचाहुः । या हि दीर्घमिताक्षस्य । अकार्षं हि ॥

## हिं स्तो त्रे ( भे ? ) ॥ २९ ॥

स्तो( तो ? )भो विवेकस्याविवर्णस्य चानन्तरम् । ( ? ) नवा अहिंकृत्य सामगीयते । हिंकारः ॥

## हू निन्दादौ ॥ ३० ॥

हू [1] शो (श्या ? ) च्या जनतानिन्दा । आह्वानेऽपि । हूहू नायात यातनाम् ॥

## हं असम्मतौ ॥ ३१ ॥

हं क एवमाह ॥

---

1. ‘ हू शोश्याजनतानिन्दाह्वानेऽपि हूहू नायात यातनाम् ’ इति एकाकारेण मातृकायां पंक्तिर्विद्यते ॥

### हुं स्मृतिभ्रकुटिभयविकार (ण?) भर्त्सनेषु ॥ ३२ ॥

स्मृतौः— हुं सत्यं चैत्रः । भ्रुकुटया क्रोधः सूच्यते । हुं हन्मि त्वाम् । हुङ्कारः । भये— हुं राक्षसोऽयम् । विका( रणे ? )रे— हुं हुं मुञ्च । भर्त्सने— हुं निर्लज्ज ।

### हो प्रतिवाक्ये ॥ ३३ ॥

हो किं करवाणि ॥

### अहो अहह बत खेदाद्भुतयोः ॥ ३४ ॥

खेदे— अहो प्रमादः । अहह महापातकिन् । अहहो इत्यप्याहुः । अहहो चक्षुः कृतघ्नं कियत् । बत सीता हृता बलात । अहो बत महत् कष्टमिति प्रकर्षसमुदायः । अहो बतासि स्पृहणीयवीर्यः । अद्भुते— अहो आश्चर्यम् । अहह प्रज्ञा सताम् । चित्रं हृद्यं( नत ? )नमत बत । अनुकम्पासंतोषौ खेदाद्भुतावेव । बत निन्द्योऽसि । बत जीवामः ॥

### ही भर्त्सने च ॥ ३५ ॥

भर्त्सने— ही जाल्म । खेदे —ही नविद्मो जडा वयम् । अद्भुते - हतविधिलसितानां ही विचित्रो विपाकः । प्रीतिरद्भुतमेव । ही ही जितं मया । हीहीभोः इति प्राकृते निपातसमुदायः ॥

### हा शोकखेदनिन्दासंभ्रमेषु ॥ ३६ ॥

शोके— हा प्रिये ! जनकराजपुत्रि । खेदे— स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः । निन्दायाम्— हा श्रोत्रियानहृदयान् । संभ्रमे— हाहा किं पुरोधाः । विस्मयेऽस्य प्रयोगो दुरुपपादः । आमन्त्रणे शोकगर्भत्वात् सिद्धम् ॥

### ओं प्रारम्भाङ्गीकारान्तब्रह्मसु ॥ ३७ ॥

प्रारम्भे— ओं अग्निमीडे पुरोहितम् । अङ्गीकारे— ओमित्युक्तवतोऽथ शार्ङ्गिण इति । अनुज्ञाऽङ्गीकार एव । अग्नौ करवाणि । ओं कुरु । अन्ते—

ब्रह्म भूर्भुवः स्वरोम् । तूष्णींभावोऽन्त एव । कद्वदों कुरु । ब्रह्मणि—अव्ययम् — ओमित्येकाक्षरं ब्रह्म ॥

## हंहो हे है हये हरे भो आह्वाने ॥ ३८ ॥

हंहो भीम । हे चैत्र । है (वाड्वले ?) हये जाये मनसा तिष्ठ घोरे । हरे साहसिन् । भो भो भार्गव (गार्ग्य गालयते ?) खेदरुतादावप्यामन्त्रणगर्भत्वात् । श्रान्तोस्मि भोः । सोऽहं भो भुवि भार्गवः ।

## अररे सावक्षेपे आमन्त्रणे ॥ ३९ ॥

अररे महाराजं प्रति कुतः क्षत्रियाः । अररे इत्यार्याः ॥

## रे अरे अवे हीनानाम् ॥ ४० ॥

रे चौर । अरे चेट । अवे वृषल । "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इति नाट्योक्तौ ॥

## भगो अघो पूज्ययायिनोः ॥ ४१ ॥

भगो इन्द्र । अघो चौर ।

## अङ्गेष्टाह्वानपुनरर्थयोः ॥ ४२ ॥

इष्टाह्वाने—अङ्गानङ्ग ! । पुनरर्थे—मूर्खोऽपि नावमन्तव्यः किमङ्गविद्वान् ॥

## अयि प्रणयकोपे ॥ ४३ ॥

आह्वान इत्येव । अयि ! विजहीहि दृढोपगूहनम् । अय्ययि साहसकारिणि ।

## हा शोकोपाधिके ॥ ४४ ॥

हा मातः । आह्वानमाहुः ॥

**अये स्मृतिक्रोधखेदसंभ्रमेषु ॥ ४५ ॥**

स्मृतौ—अये रामो दाशरथिः । क्रोधे—अये कोऽयम् । खेदे—अये श्रान्ताः स्मः । संभ्रमे— अये धवत धावत ॥

**आहो वितर्के ॥ ४६ ॥**

स्थाणुराहो पुरुषः ॥

**उत प्रश्नवाक्यार्थसमुच्चयेषु ॥ ४७ ॥**

प्रश्ने— उत दण्डः पतिष्यति । वाक्यार्थे—अयि लुठद्यद्गजदन्तः परिणत उत पर्वतं भिन्द्यात् । समुच्चये— उत भीम उतार्जुनः । चाद्वितर्के—स्थाणुरुत पुरुषः । समुदायोऽपि । उताहो पुरुषः । आहोस्वित् उतस्वित् उताहोस्वित् भवेद्राजानलः परपुरञ्जयः ॥ पूरणेप्याहुः । शुभं कर्म करोम्युत ॥

**कूपत् सूपत् यूपत् प्रश्नवितर्कप्रशंसासु ॥ ४८ ॥**

प्रश्ने — कूपत् पठति । किं पठतीत्यर्थः । वितर्के — स्थाणुः कूपत् पुरुषः । प्रशंसायाम्— कूपद्गायत । एवं द्वावुदाहार्यौ ॥

**धिक् गर्हायाम् ॥ ४९ ॥**

धिक् तार्किकान् ॥

**हाधिक् खेदे ॥ ५० ॥**

हाधिक्! किमिदं वृत्तम् । शोकोऽपि खेद एव ॥

**नन्वाक्षेपानुज्ञेच्छाप्रश्नप्रत्युक्तिवाक्यारम्भनिश्चयेषु ॥ ५१ ॥**

आक्षेपे— ननु किमागतोऽसि । अनुज्ञेच्छायाम् — ननु अनुजानीहि माम् । प्रश्ने— नन्वध्येष्यसि । काका किमर्थो लभ्यते । प्रत्युक्तौ—अकार्षीः कटं देवदत्त! ननु करोमि भोः । वाक्यारम्भे—नन्वपोहस्तावदुच्यते । निश्चये—नन्वद्य गच्छामः ॥

**नु प्रश्नोपमाप्रत्युक्तिवितर्केषु ॥ ५२ ॥**

प्रश्ने— को नु वादमीरत्यन्तरिक्षे । उपमायाम्— वृक्षस्य नु ते पुरुहूतवयाः । प्रत्युक्तौ— अकार्षीः कटं चैत्र? नु करोमि । वितर्के— अहिर्नु रज्जुर्नु ॥

**किं प्रश्नाक्षेपातिशयेषदर्थेषु ॥ ५३ ॥**

प्रश्ने—किं राजाऽयम्? आक्षेपे—किं त्वमपि ब्राह्मणः । अतिशये—रम्यं किमपि तत् । ईषदर्थे— किमपि नास्ति । स्वल्पमपि नास्तीत्यर्थः । सर्वनामाऽप्ययमस्ति । कः सब्रह्मचार्यस्य = किंब्रह्मचारी । कुत्सितो गौः = किंगौः । यो न वहति । "किमः क्षेप" इति समासान्तत्वाऽभावः । कामप्यभिख्याम् । कुत्सितो नरः = किंनरः ॥

**किमु संभावनाविमर्शयोः ॥ ५४ ॥**

संभावनायाम्— शूरोऽर्जुनः किमु जेष्यत्यरीन् । विमर्शे— किमु गच्छामि किमु तिष्ठामि ॥

**कद्रर्थे ॥ ५५ ॥**

**कद्** रुद्राय प्रचेतसे ॥

**अत आतो यत्तद्रर्थौ ॥ ५६ ॥**

विप्रोऽ**तः** पूज्यः । **आत**स्ते द्यावापृथिव्योर्वीरवादः । कस्मात्पूज्यसे विद्वन् **यत्** सभासु प्रगल्भसे । धृष्टोऽसि **तत्** (करूम?) करवाम ॥

**क्विद्भर्त्सने ॥ ५७ ॥**

**क्वित्** कितव ॥ पूरणेऽप्याहुः । क्वित् कैतदुपयुज्यते ॥

**इवोपमोत्प्रेक्षावाक्यालङ्कारेषदर्थेषु ॥ ५८ ॥**

उपमायाम्— चन्द्र इव मुखम् । निदर्शनमुपमैव । क इव दीनं हन्यात् । उत्प्रेक्षायाम्— लिम्पतीव तमोऽङ्गानि । वाक्यालङ्कारे— कथमिवैतद्भविष्यति । ईषदर्थे— गौर इव ॥

## किलागमालीकारुचिहेतूल्लुण्ठनासु ॥ ५९ ॥

आगमे— जघान कंसं किल वासुदेवः । अलीके— गोत्रस्खलितं किलाश्रुत्वा । अरुचौ— एवं किलेह । हेतौ— नकिल कपिरेवमुक्तवान् । उल्लुण्ठनायाम्— त्वं किल योत्स्यसे ॥

## खलु निषेधवाक्यालङ्कारजिज्ञासानुनयेषु ॥ ६० ॥

निषेधे— खलु कृत्वा । निषिद्धं करणमित्यर्थः । वाक्यालङ्कारे— अथो खल्वाहुः । जिज्ञासायाम्— स खल्वधीते वेदम् । स किं वेदं पठतीत्यर्थः । अनुनये— नखलु नखलु मुग्धे साहसं कार्यमेवम् ॥ पूरणेऽप्याहुः । अहोनु खलु भोः ॥

## नाम प्रकाशालीकामर्शक्रोधकुत्सासंभावनामासूयाङ्गीकारेषु ॥ ६१ ॥

प्रकाशे— हिमालयो नाम नगाधिराजः । अलीके— दष्टेधरे रोदिति नाम तन्वी । आमर्शे— मया नाम स्पृश्यसे । क्रोधे— ममाऽपि नाम दशाननस्य परैः परिभवः । कुत्सायाम्— आस नामायं सवितुरुदयः । संभावनायाम्— कथं नाम समेष्यसि । स्मृतावपि संभावनयैव सिद्ध्यति । स नामायं बन्धुः । सासूयाङ्गीकारे— एवमस्तु नाम । विस्मयेऽप्याहुः । (सान्धा ?) सुन्दो नाम पर्वतमारोक्ष्यति ॥

## स्माऽतीते ॥ ६२ ॥

इतिह स्माहुरात्रेयाद्या महर्षयः ॥ पूरणेऽप्याहुः । अङ्ग स्म विद्वन् माणवकमध्यापय ॥

## साकं सार्धं समं सत्रा सह सजूरैक्ये ॥ ६३ ॥

पुत्रेण **साकं** याति । **सार्धं** धनैर्महान् । भ्राता **समं** युध्यते । **सत्रा** कलत्रैः पीतः । पुत्रेण **सह** गोमान् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति विद्यमानतायामैक्यमस्त्येव । अथ श्रवणयोस्संगो द्विजिह्वैः **सजू**रिति गतिप्रतिरूपको निपातः ॥

**अमा समीपे च ॥ ६४ ॥**

अमा भवत्यमात्यः । ऐक्ये—सह भूत्वाऽऽसनममासनम् । सह वसतश्चन्द्रार्कावस्याममावस्या । पुत्रेणामा ॥

**आङ् मर्यादाभिविधीषदर्थे ॥ ६५ ॥**

मर्यादायाम्— आ उदकान्तात् प्रियमनुव्रजेत् । अभिविधौ— आपाटलिपुत्रात् वृष्टो देवः । विना तेनेति मर्यादा । सह तेनेत्यभिविधिः । ईषदर्थेऽव्ययम् । आ उष्णम् = ओष्णम् । क्रियायोगे उपसर्गः । आयाति ॥

**आ वाक्यस्मृत्योः ॥ ६६ ॥**

आ एवं नु मन्यसे । पूर्वं नैवममंस्थाः, अद्यतु मन्यसे इत्यर्थः । निपात एकाजनाङिति प्रगृह्यसंज्ञः । स्मृतौ—आ एवं किल तत् ॥ समुच्चयेऽप्याहुः । देवेभ्यश्च पितृभ्यश्च आ ॥

**आम् प्रतिवाक्ये ॥ ६७ ॥**

आम् किं ब्रूथ ? ॥

**आम परमं बाढं चाङ्गीकारे ॥ ६८ ॥**

**आम** एषोऽस्मि । **परमं** तत्रावासः । **बाढं** प्रीतोऽस्मि । आम गच्छामि । स्मरणेऽप्यङ्गीकारो मूलम् । आम चिरस्य स्मृतम् ॥

**आः कोपपीडयोः ॥ ६९ ॥**

कोपे—आः रक्षस्तिष्ठ तिष्ठ । पीडायाम्—आः कष्टम् ॥

**उश्चिदर्थे ॥ ७० ॥**

क उ विप्रः क उ वह्निः ॥

**उम् स्मृतौ ॥ ७१ ॥**

उमेवमेतत् ॥

**ऊम् स्त्रीणां विकारे ॥ ७२ ॥**

ऊम् नाहं जाने ॥

**इति हेतुप्रकारस्वरूपसमाप्तिविवक्षानियमशब्दप्रादुर्भावैवमर्थेषु ॥ ७३ ॥**

हेतौ—हन्तीति पलायते । प्रकारे—गौरश्वो हस्तीति जातिः । स्वरूपे—वृद्धिरित्येव या दृष्टिः । समाप्तौ—अअ इति । विवक्षानियमे—तदस्याऽस्त्यस्मिन्निति मतुप् । इति शब्दात्—'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसङ्गेऽस्तिविवक्षायां भवन्ति मतुबादयः । शब्दप्रादुर्भावे—इति पाणिनिः । पाणिनिशब्दः प्रसिद्ध इत्यर्थः । एवमर्थे—क्रमादमुं नारद इत्यबोधि सः । मतेऽपि । एवमर्थत्वात् । इत्यापिशलिः ॥

समुच्चयेऽप्याहुः । गार्ग्यो वात्स्यो भारद्वाज इति ।

([1] दादिवे मुमुचारः । इर्कामांक्वानर्थकात् । द्रुपकाष्टनिगडाद्यथा मुक्त इत्यर्थः । शिशिरं जीवनाय कम् । शूकं पूजायम् । एवं सुकं नुकं वितर्के नहिकं निषेधे काटुसारे पिशङ्गला । अनेका पिशङ्गलेत्यर्थः । आक्वावें अग्निमिन्धते । अन्यानपि यथास्थानं वक्ष्यामः । इतिहखलुवं पादपूरणेऽप्याहुः । किमु किमुताङ्गो नहि नखलु यतः । केऽप्येषां वाचकाः केऽपि द्योतकाः केऽप्यनर्थकाः । संभूय स्वार्थमेवैते प्राहुः । यथा इति ह स्माहुः । अरेरे यस्तुवै वेत्ति शास्त्रार्थम् । नृवा । अर्थान्तरं परे । तद्यथा—किंतु किमुत किंपुनः किमङ्ग विशेषे । किंतु मत्ता-

---

1. (        ) तच्चिह्नमध्यगतो ग्रन्थः संकीर्णः अर्थसङ्गतिशून्यश्च वर्तते । अवश्यमत्र ग्रन्थपातः संभूतः स्यात् । मातृकान्तराऽलाभाच्च संवादस्याऽप्यवकाशो नाऽलभ्यत । उपलब्धमातृकातः यथास्थितमत्रोल्लिखितम् । यथाकथञ्चिद्यथामति अभ्यूह्य सपरिष्कारं विनिवेशितेसति ग्रन्थपातसहितो भाग एवं विद्यते—'इत्कमांक्वा अनर्थकाः । इत्—द्रुपदादिवेन्मुमुचानः । द्रुपदात् = निगडाद्यथा मुक्त इत्यर्थः । कम्—शिशिरं जीवनाय कम् । ईम्—(उदाहरणमपेक्षितम् ।) क्वाः—आक्वावें अग्निमिन्धते । (?) शूकं पूजायाम् । (उदाहरणमपेक्षितम्) एवं सुकम् । नुकं वितर्के । ( उदा ... ) नहिकं निषेधे । ( उदा ... ) काटुसारे । ( उदा... ) ... ... पिशङ्गला । अनेका पिशङ्गलेत्यर्थः । 'अन्यानपि यथास्थानं वक्ष्यामः ।' इत्यादि यथास्थितमेव द्रष्टव्यम् ।

परं तु अत्रापि सांकर्यं परिष्कारासाध्यत्वं च दृश्यत एव । 'केप्येषा'मित्यादिश्लोकः असंपूर्णो विद्यते । 'नृवा' । इदं किमिति न ज्ञायते । 'अर्थान्तरं परे । तद्यथा' एतदनन्तरं ग्रन्थपात इव ॥

अनापाङ्गभङ्गलोलं हि जीवितम् । प्राकृतोऽपि नावमन्तव्यः किमुत राजा । किंपुन-र्भयोर्नेयः स्वभावाद्दाहको वह्निः किमङ्ग पवनेरितः ॥ )

**नहवै निश्चितनिषेधावधारणे ॥ ७४ ॥**

नहवै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति । अवश्यं नास्त्येवेत्यर्थः ॥

**नवै निषेधावधारणविशेषनिषेधयोः ॥ ७५ ॥**

निषेधावधारणे - नवै वेश्यासु स्नेहोऽस्ति । विशेषनिषेधे—नवै त **एतत्** **प्रियमनेन नेष्यसि** ॥

**अथकिं मते ॥ ७६ ॥**

अपि ब्राह्मणोऽसि ? अथ किम् । बाढमित्यर्थः ॥

**एवमेव सामान्ये च ॥ ७७ ॥**

सामान्ये—एवमेव नहि जीव्यते, खलात् कापुनर्भवति कथा । मते—एवमेवैतत् । कः संदेहः ? एवमेव गतः, एवमेवागत इति वृथार्थेऽप्याहुः ॥

**यदिनाम यदिपरं प्रकृत्यान्यथात्वे ॥ ७८ ॥**

विप्रोसि **यदिनाम** मूर्खः । **यदिपरं** प्रेमा समाप्तोत्सवम् । यदिनाम कुले जन्मेति द्वौ स्वार्थे ॥

**यदुत वाक्यार्थनिर्देशे ॥ ७९ ॥**

वाच्योऽसौ **यदुत** ग्रामं गच्छ ॥

**प्रत्युताऽतोऽन्यथात्वे ॥ ८० ॥**

घृतमिव गतपद्याः प्रत्युतातङ्ककारि ॥

**यथाकथञ्चिद्यथाकथाचानादरे ॥ ८१ ॥**

**यथाकथञ्चिद्**दत्वा गां दाता स्वर्गे महीयते । **यथाकथाच** दीयते । **यथा-कथाच** भिक्षा नप्राप्ता । यथाकथाच हस्ताभ्याम् .... .... .... **यतौ** ॥

**इतिह प्रवादे ॥ ८२ ॥**

**इतिहा**ऽकरोत् । **इतिह** स्माहुः ॥

**मातावन्निषेधानिश्चययोः ॥ ८३ ॥**

निषेधे— मातावद्वद । अनिश्चये— मातावद्भुङ्क्ष्व । "मातावद्भोः" इत्यमर्शो निषेध एव ॥

**कथंचित् कृच्छ्रे ॥ ८४ ॥**

**कथञ्चिदासाद्य** महेश्वरस्य दास्यम् ॥

**अथवा यदिवा यद्वा पक्षान्तरे ॥ ८५ ॥**

कटं कुरु **अथवा** ग्रामं गच्छ । **यदिवा** ग्रामं गच्छ । एवं यद्वा ॥

**अपिच किंचान्यच्च समुच्चये ॥ ८६ ॥**

विप्रोऽयम**पिच** विद्वान् । **किंच** त्वद्गुणवागुराभिरभितः । **अन्यच्च** श्रूयताम् ॥

**ननुच क्षेपे ॥ ८७ ॥**

नित्यः शब्दः । ननुच कः शब्दः ? स्फोटो वर्णो वा ?

**( यश्च ? ) यच्च यत्रानवक्लृप्त्यमर्ष ( हर्षा ? ) गर्हाश्चर्येषु ॥ ८८ ॥**

नावकल्पयामि नमर्षयामि गर्हे आश्चर्यं **यच्च** ( यश्च ? ) तत्रभवान् वृषलं याजयेत् ॥

**किंकिल क्रोधाश्रद्धयोः ॥ ८९ ॥**

नमर्षयामि श्रद्दधे **किंकिल** शूद्रोऽध्येष्यते ॥

**ईही भर्त्सने ॥ ९० ॥**

**ईही** मूर्ख ॥

**कदाचिदपूर्वाशङ्कयोः ॥ ९१ ॥**

अपूर्वे— कदाचिद्भुव उत्पातः । आशङ्कायाम्— कदाचित् प्राप्तः स्यात् ॥

**अहोनुखलु ( हो ? ) आश्चर्ये ॥ ९२ ॥**

व्यस्तालङ्कृतिरप्यहोनुखलु ते तल्लंघितप्रक्रिया, चेतः सूक्तिनितम्बिनी, मदभरादाघूर्णितं कर्षति ॥

## नोचेन्नचेदन्यथार्थे ॥ ९३ ॥

**नोचेद्** गर्भभियातु जन्तुवनितानेत्रप्रणालीगलद्वाष्पाम्भः परिपूरितोभयतटा द्राग् वर्त्स्यतीरावती ॥ साहसाद्विरम ( ते? )ति, तस्मान्नचेन्मृत्युमाप्स्य ( सि? ) ति ॥

## उपसर्गप्रतिरूपकाः ॥ ९४ ॥

निपाता इत्येव । अदत्त उपसर्गत्वेच उपसर्गान्तइति तत्वं स्यात । (?) यथा ( च? ) त्वंच प्रत्ययसमासौ नस्यानाम् । प्रकटः । प्रतराम् । पराकः । परागः । अपाङ्गः । अपसव्यम् । अपहस्तः । संकटः । संमुखः । संप्रति । अनुकः । अनुकूलम् । अवदत्तः । अवकुठारः । अवटीटः । अवनासिका । निमुखः । निष्ठ्यः । निर्मक्षिकम् । दुष्कूलः । दुर्भिक्षम् । दुर्यवनम् । विकटः । विशालः । विशङ्कटः । आकडरः । (?) आलवणम् । नितराम् । निकामम् । निशीतम । अधिपतिः । अधीनः । अधित्यका । अधि अस्ति । (?) अपि कुर्यात् । अपि कुशलम् । अकिंचनोऽपीश्वरः । अतिकायम् । अतितराम् । अति (तैपकम् ?) आच्छादनम् । सुतराम् । सुभगः । सुमद्रः । उत्कटः । उत्कः । उत्तमः । अभितः । अभिकः । अभिमन्युः । प्रतिकूलम् । प्रतिभटः । शाकस्य माला = शाकप्रति । अक्षपरि । परितः । परिमुखम् । उपेन्द्रः । उपत्यका । उपकुम्भम् ॥

## विभक्तिप्रतिरूपकाः ॥ ९५ ॥

अधिक्रियन्ते ॥

## अग्रे हेतौ रात्रौ वेलायां मात्रायां परस्पराद्याः स्वार्थे ॥ ९६ ॥

एते स्वार्थे । अग्राद्यर्थे । विभक्त्यर्थस्तु क्वचिद्विवक्षितः । **अग्रे**सरः । **अग्रे**वनम् । **हेतौ** हृष्यति । **रात्रौ** चरः । **रात्रौ** नृत्तं तु द्रक्ष्यसि । **वेलायां** चरः । **मात्रायां** भोजकः । **परस्परस्य** स्पर्धन्ते । **अन्योन्यस्य** पश्यतः । कुलात्म क्वचमेखलेति गलते प्राणस्समानग्रहः । अनत्याधान उरसिमनसी, मध्ये पदे निवचनेच, नित्यं हस्ते पाणावुपयमनइति निर्देशादलुक् । ( यथा पारंमध्ये षष्ठ्यावा? ) पारेमध्ये षष्ठ्या वा । मनसिकृत्य । पारं गङ्गायाः = पारेगङ्गम् ॥

**ममाहं दर्पे ॥ ९७ ॥**

**मम**कारः । **मम**ता । निर्**मम**ः । अहं विद्यतेऽस्य = अहंयुः । अहंकारः । अहमहमिका ॥

**अकस्मादतर्किते ॥ ९८ ॥**

**कस्मादकस्मा**दुदितः पिशाचः ॥

**अञ्जसा सत्ये च ॥ ९९ ॥**

सत्ये — अञ्जसा वक्ति धीमं यज्वाऽञ्जसा याति ब्रह्मलोकम् ॥

**स्थाने युक्ते ॥ १०० ॥**

**स्थाने** यन्निहतः शत्रुः ॥

**शुभं कल्याणे ॥ १०१ ॥**

**शुभं**युः । **शुभं**याः । कल्याणवानित्यर्थः ॥

**कृतं वारणे ॥ १०२ ॥**

**कृतं** चापलेन ॥

**पर्याप्तं समर्थे च ॥ १०३ ॥**

सामर्थ्ये — त्वयैव किं न **पर्याप्तम्** ? । वारणे — **पर्याप्तं** साहसेन ॥

**ते मे द्यर्थे ॥ १०४ ॥**

श्रुतं **ते** राजशार्दूल । श्रुतं **मे** भरतर्षभ । त्वया मयेत्यर्थः ॥

**येन तेन लक्षणहेत्वोः ॥ १०५ ॥**

नदीं **तेन** गतः । गिरिं **येन** ययौ । नदीं गिरिं च लक्ष्यीकृत्येत्यर्थः । हेतौ — **येन** दाता **तेन** श्लाघ्यः ॥

**अन्ततः शासनावयवसंभावनयोः ॥ १०६ ॥**

**शासनावयवे** — ( किंविदथा ? ) अन्ततः प्रजां प्राप्स्यति । संभावनायाम् — **अन्ततः** शतं दास्यति ॥

**तत आद्यानन्तरयथान्तरेषु ॥ १०७ ॥**

आद्ये— ततः प्रववृते सर्गः । अनन्तरे— अन्नं भुङ्क्ते ततः शेते । यथान्तरे— ततस्ततः ॥

**कुतः प्रश्ननिह्नवयोः ॥ १०८ ॥**

प्रश्ने— कुतस्त्यः ? निह्नवे— कुतो मे भार्या ॥

**यथा योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु ॥ १०९ ॥**

योग्यतायाम्— श्रुते योग्या = यथाश्रुतमस्य दक्षिणा । वीप्सायाम्— येये वृद्धाः = यथावृद्धं ब्राह्मणानामन्त्रयस्व । पदार्थानतिवृत्तौ— शक्तिमनतिक्रम्य = यथाशक्ति वक्ति । सादृश्ये— लक्ष्मीर्यथेयम् । अनुमाने प्रकारेण सिद्धम् । चौरोऽयं यथाऽस्य श्लिष्टे भ्रुवौ ॥

**तथा समुच्चयाङ्गीकारनिदर्शनसादृश्येषु ॥ ११० ॥**

समुच्चये— हारीतोऽयमहं तथा । अङ्गीकारे— स तथेति प्रतिज्ञाय । निदर्शने— तथाहि ते शीलमुदारदर्शने । सादृश्ये— अयमपि तथा । सत्ये प्रकारेच । तत्तथा न तदन्यथा । तथ्यं वितथ्यम् ॥

**द्वावुद्दे ( श्य ? ) श निर्दे ( श्यो ? ) शौपम्यकारणोपपत्तिषु ॥ १११ ॥**

उद्देशे— यथाऽर्कस्तथा तेजः । निर्देशे— यथातथा ( सं ? ) सान्त्वयित्वा वश्यः स्वाणां तथा तथा । औपम्ये— यथा अर्कस्तथा कर्णः । कारणोपपत्तौ— यथा विनीतस्तथा पण्डितोऽयम् ॥

**कथं प्रश्नसंभ्रमासंभवेषु ॥ ११२ ॥**

प्रश्ने — कथमजीर्णम् ? संभ्रमे— कथं हतः कर्णः ! असंभवे— कथं मातो योत्स्यते । हर्षेऽप्याहुः । कथं वत्सो मे रामभद्रः ॥

**तदा आरम्भे ॥ ११३ ॥**

तदाप्रभृति निस्सङ्गः ॥

**यदा हेतौ च ॥ ११४ ॥**

यदा बुधः सर्वगतस्त्वमुच्यसे । यदा मूर्खस्तदा शठः ॥

**तर्हि हेतुविशेषयोः ॥ ११५ ॥**

हेतौ—तर्हि ग्रामं गच्छति । विशेषे—अर्जुनस्तर्हि शूरतमः । पक्षान्तरं हेतुरेव । यद्येवं तर्हि गच्छामः ॥

**यावद्धेतुसीम्नोः ॥ ११६ ॥**

हेतौ—यावद्भवत्याहितसायकस्य । मर्यादायाम (सीमनि)—यावत् पुरं वृष्टो देवः । यावद्दूरं गच्छ मरुतां चरन्ति । अधिकारः सीमैव । यावत् संभवस्तावद्विधिः । साकल्येऽवधारणे च । यावद्दत्तं तावद्भुक्तम् । यावज्जीवमग्निहोत्रं जुहुयात् । यावन्त्यमत्राणि संभवन्ति यावदमत्रं ब्राह्मणान् भोजय ॥

**यावताच पक्षान्तरे ॥ ११७ ॥**

ज्ञाने सतोभावान्यावता नगतः । (?) ज्ञानेऽन्यायं यावत्स एव ॥ (?)

**तावत् संप्रत्यवध्यल्पेषु ॥ ११८ ॥**

संप्रति—आस्तां तावत् । अवधौ—वध्यसे तावत्, तावच्छृणु । अल्पे—तावन्मात्रम् ॥

**अस्ति सत्त्वे ॥ ११९ ॥**

अस्तिक्षीरा ब्राह्मणी । अस्तिमांश्चैत्रः । अस्ति परलोके मतिरस्याऽस्तिकः । अस्त्यत्र कंचित् पश्यसि विद्वांसम् ॥

**नास्ति प्रत्यनीके ॥ १२० ॥**

नास्तिकः । नास्ति जीयते रामः । नास्ति वा दरशून्यः ॥

**अस्म्यसि त्वमहमर्थे ॥ १२१ ॥**

बाल्यादर्मित्वमस्यासि चन्द्रग्रहणे न विना नास्मि रमे अस्मिता । (?)

**विद्यते भवत्यस्त्यर्थे ॥ १२२ ॥**

विद्यते नाम तत्रभवान् वृषलं वा (यजिष्यति । ?) याजयिष्यति । भवति नाम ॥

एहि प्रहासे ॥ १२३ ॥

एहि मन्ये रथेन यास्यसि यातस्ते भ्राता । एहि न त्वया वक्ष्ये । (?)

ब्रूहि प्रैषादौ ॥ १२४ ॥

अग्नयेऽनुब्रूहि । [1] ( तर्कितिः तिङ्इति निपाते भ्रस्याच्छङ्के भ्राः वितर्के स्यात् । अस्ति स्यान्नास्ति स्याद्वादः । शङ्के रात्रौ प्रयास्यति । मन्ये मूर्खोऽयम् । जानाम्यशेषसुररूपधरस्त्वमेकः ॥ )

अस्तु भवतु पूर्यते ( वारुणे ? ) वारणे ॥ १२५ ॥

अस्तु साम्ना । अस्तुङ्कारः । भवतु भक्त्या । पूर्यते प्राणायामेन ॥

आसाऽह विदर्थे ॥ १२६ ॥

लावण्य उत्पाद्य इवाऽऽस यत्नः । अथाऽह वर्णी विदितो महेश्वरः ॥

वर्तते संवरणे ॥ १२७ ॥

धन्यास्ते ( नविलङ्घयेन ? ) नविलङ्घनीयचरिताः तिष्ठन्तु हुं वर्तते ॥ ( वृद्धास्ते नविचारणीयचरिताः । ? )

नवर्ततेऽनुचिते ॥ १२८ ॥

नवर्तते साराभिऽमुखे पत्यावश्रुपातः ॥

याति गच्छति शक्ते ॥ १२९ ॥

इदं मे यातुं गच्छति । गर्तुं ? गन्तुं शक्यमित्यर्थः । नेतुं नाभिरिता नयाति किं विदिशं भक्तुं गच्छति ॥ (?)

पश्य पश्यत आश्चर्ये ॥ १३० ॥

पश्य बालोऽपि विद्वान् । पश्यत मूर्खा विजृम्भन्ते ॥

---

1. ( ) एवं चिह्नितो भागः सङ्गतिराहितो भाति । अत्राऽपि ग्रन्थपातो भवेत् ॥
2. अत्राऽपि अर्थविषये संदेह एव ॥

स्वरप्रतिरूपका अद्व्यादौ ॥ १३१ ॥

अ अमक (१) । इ इन्द्रं पश्य । ई ईदृक्संसारः । उ उत्तिष्ठ । ऊ ऊर्ध्वकेशिन् । ए इतो भव । ऐ ऐश्वर्यमत्ताः । ओ श्रावय । औ औवें दुर्भरोऽसि ॥

प्रत्ययप्रतिरूपका अपि निपाता दृश्यन्ते । मूर्खइति कृत्वा त्याज्यः । कृत्वा चिन्तेयम् । आपमित्यकम् । प्रसज्य प्रतिषेधः । देवदत्त गामत्याजेतिवत् ॥ (१)

इति निपाताव्ययोपसर्गवृत्तौ (तिलककृतायां)

निपातकाण्डं प्रथमम् ॥

॥ श्रीः ॥

---

श्रीः

श्रीगुरवे नमः

# ॥ द्वितीयमव्ययकाण्डम् ॥



## सत्ववृत्त्यव्ययम् ॥ १ ॥

प्रायशः सत्ववृत्ति स्वराद्यमव्ययमित्यधिक्रियते । सत्वं द्रव्यं ( भेदमिति[1] ) मेद्यमिति यावत् । विशेष्यत्वं च जातिगुणक्रियाद्रव्ययदृच्छाशब्दसंबन्धत्वात् । ([1] झः ईषत् नमः दिवा हूहू अन्तः । ) अत एव सर्वविभक्तियो (गः ?) गे स्वारस्यम् । एहि जाये स्वः रोहावः । स्वः संजानीते । स्वः स्पृहयति । स्वः पतितः । छायेव या स्वर्जलधेर्जलेषु । स्वर्वसतिः । रे! स्वस्तृणं मे त्वम् । स्वः सुखे । स्वस्था भवन्तु कुरुराजसुतास्सभृत्याः ॥

## प्रेत्यामुत्रपरत्र च परलोके ॥ २ ॥

अभ्यो धनं प्रेत्यच तस्य भुङ्क्ते । अमुत्र भविता यत्तु तच्चिन्तय शुभाऽशुभम् । अमुत्र भवः = आमुत्रिकः । पारत्रिकः । स्वर्यातस्याप्यपुत्रस्य । (?)

## भूर्भुवः स्वर्महज्जनस्तपः सत्य(?)लोकान्तरेषु ॥ ३ ॥

भूर्लोकः । भुवोऽन्तरिक्षम् । ओं महत् — महल्लोकः । महदादितश्च कार्यमिति भ्रान्त्या प्रयोगः । ओं जनः । ओं तपः । ओं सत्यम् ॥

## अन्तर्मध्ये ॥ ४ ॥

भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् । (?) अभ्यन्तरं मध्यमेव । अन्तर्यामी ॥

## बहिर्बाह्ये ॥ ५ ॥

बहिर्ग्रामात् । [2] ( अन्ते जानोदधिध्वं पचतेत सोमं भर्त्त्रेच नोदधिध्वम् .... .... .... .... .... श्रद्दध्वमित्यर्थः । )

---

1. ( ) एवं चिह्नितस्य भागस्य संगतिर्न दृश्यते ॥ 2. अस्य संगतिः कथम्?

**जामि भूय आवृत्तौ ॥ ६ ॥**

जामयो जामि ज्वलन्ति । भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितम् ॥

**पुनर्विशेषेच ॥ ७ ॥**

आवृत्तौ—पुनरुक्तम् । विशेषे—किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥

**प्रातः प्रगे प्राह्णे प्रत्यूपे ॥ ८ ॥**

प्रातरुत्तिष्ठति । प्रगे प्रबुद्धः । प्राह्णेतनः ॥

**वस्तर्दिवाह (?) ॥ ९ ॥**

कुहस्विद्दोषा कुह वस्तरश्विना । दिवातनम् । अहरहर्नयमानो गामश्वं पुरुषं पशुम् ॥

**सायं दिनान्ते ॥ १० ॥**

सायंतनी सन्ध्या ॥

**दोषा नक्तमुषा रात्रौ ॥ ११ ॥**

दोषा महान् । (?) नक्तं चरः । उषातनो वायुः ॥

**ह्योऽतीते ॥ १२ ॥**

असह्यो ह्योऽभवद्वायुः । ह्यस्तनन् ॥

**श्वोऽनागते ॥ १३ ॥**

श्वो गन्ता ग्रामम् । श्वस्तनम् ॥

**परश्वः श्वःपरेऽह्नि ॥ १४ ॥**

परश्वो गन्ता । "तृतीयेऽह्नि" इत्यर्थः ॥

**संवद्वर्षे ॥ १५ ॥**

संवत्तृतीये ॥

**अस्तं समुता नुत (?) ॥ १६ ॥**

अस्तं समयः। समुता वास्तव इन्द्रो अस्मे अराश्चिद्द्वेषः। (?) सुनुत पर्युप ॥

**कं मूर्धाम्बुसुखनिन्दासु ॥ १७ ॥**

मूर्ध्नि—कंजः केशः। अम्बुनि—कंजं पद्मम्। सुखे—विद्यतेस्या कम्। (?) (विद्यतेऽस्य कम्। ?)[1]

**शं सुखे ॥ १८ ॥**[2]

शं योरभिस्रवन्तु नः। आपो नः सुखमभिस्रवन्त्वित्यर्थः। नमः शंकराय च मयस्कराय च ॥

**पुरा भूतविप्रकर्षभविष्यदासत्त्योः ॥ १९ ॥**

भूतविप्रकर्षे—पुराऽपि वनम्। पुराणम्। पुरातनः। भविष्यदासत्तौ—गच्छ पुरा देवो वर्षति ॥

**विहायसाऽऽकाशे ॥ २० ॥**

विहायसा रम्यतरं विभाति ॥

**रोदसी दिवस्पृथिव्योः ॥ २१ ॥**

रोदस्यौ रोदसी ॥

**अह्नः सद्यःशीघ्रयोः ॥ २२ ॥**

समानेऽह्नि—अह्नः शौचानि कारयेत। शीघ्रे—अह्नोऽवगच्छ ॥

**निकषा सामीप्ये ॥ २३ ॥**

लङ्कां निकषा ॥

**समया मध्येच ॥ २४ ॥**

समया ग्रामम्। मध्ये समीपेवेत्यर्थः ॥

**असांप्रतमयुक्ते ॥ २५ ॥**

स्वयं छेत्तुमसांप्रतम् ॥

---

1. (        ) एवं चिह्नितः पाठः साधुर्भवेदिति लिखितः ॥ एतदनन्तरं निन्दायामुदाहरणं देयम्। परंतु मातृकायां नाऽस्ति ॥ 2. मातृकायां सूत्ररूपं मूलं नास्ति। उदाहरणे वर्तेते। तदनुरोधेन मूलं प्रकल्प्य लिखितम् ॥

**सत्यमद्धा ऋधक् सत्ये ॥ २६ ॥**

सत्यं मनोरमाः ( वामाः ? ) रामाः । अद्धा मनुरस्य विभोः । अरे अनद्धा पुरुष ऋधग्वादी । अङ्गीकारेऽपि सत्यत्वादेव । सत्यमसारः संसारः ॥

**मिथ्या मृषा विस्रसाऽनृते ॥ २७ ॥**

मिथ्यावादी । मृषोद्यम् । विस्रसैतत् ॥

**मुधा वृथा विफले ॥ २८ ॥**

मुग्धे मुधा ताम्यसि । वृथा दुग्धोऽनड्वान् ॥

**इद्धा प्राकाश्ये ॥ २९ ॥**

समिद्धमिद्धा समहो दधासि ॥

**अर्वाक् प्राक् पूर्वे ॥ ३० ॥**

वर्षात् षोडशा ( मा? ) त् अर्वाक् । प्राग्ग्रामात् ॥

**पश्चपश्चाच्चरममन्वावर्याऽनग्रयोः ॥ ३१ ॥**

आवर्ये—पश्चार्धम् । पश्चिमम् । पश्चादस्ताद्रिः । पूर्वमयशः स्फुरति चरममधरः । मुनिं काणादमन्वतः । अनग्रे—पश्चाद्ययी । अनुचरः ॥

**मिथोऽन्योन्यम् ॥ ३२ ॥**

मिथस्त्वदाभाषणलोलुपं मनः ॥

**रहोऽप्रकाशे ॥ ३३ ॥**

[1] रहो संत्रयते । अनव्ययमप्यस्ति । रहसि भवम् = रहस्यम् ॥

**द्वन्द्वं मिथुर्मिथु ( ने? ) नं ( द्वौद्वावर्थे? ) ॥ ३४ ॥**

द्वन्द्वं मन्त्रयन्ते । मिथुः क्रीडन्ति कामिनः । मिथुनं धावन्ति विद्याधराः ॥

**यथायथं यथास्वम् ॥ ३५ ॥**

गतास्सर्वे यथायथम् ॥

---

1. रहः संत्रायते इति भर्त्रेदिद ॥

**परोवरंप रस्परं क्रमे ॥ ३६ ॥**

परंचावरंच = परोवरमनुभवति = परोवरीणः । परंच परतरंच । परस्पर-मनुभवति ॥ परस्परीणः ॥

**सम्यक् तत्त्वेष्टयोः ॥ ३७ ॥**

तत्त्वे—सम्यगाह । इष्टे— सम्यक् कृतम् ॥

**सकृत् सदैकवारयोः ॥ ३८ ॥**

सदार्थे—सकृद्युवानो गीर्वाणाः । एकवारे—सकृद्दंशं निपतति ॥

**ताजग् जोषग् झडिति तरसा स्राग् द्राङ्मङ्क्ष्वाश्वरं शैघ्र्ये ॥ ३९ ॥**

ताजग् ( याधि? ) याहि । जोषग् यात । कगिति कुचतटादं नमो मन्म-थाय । (?) झडिति घटयति विधिरभिमतमभिमुखीभूतः । तरसोदितास ( जमलेषु? ) स्राक् सरन्त्यभिसारिकाः । द्राग् विद्रुतं कातरैः । मङ्क्षूदपादि परितः पटलैः । आश्वपेहि मम शीधुभाजनात् । [1]अरेरे, सर, अजिरं, मृधं चाहुः । तूर्णं द्रुतं क्षिप्रं शीघ्रं लघ्विति क्रियाविशेषणम् ॥

**ऊर्ध्वमुपर्युपरिष्टादूर्ध्वे ॥ ४० ॥**

ऊर्ध्वं प्राणा ह्युत्क्रमन्ति । नीचैर्गच्छत्युपरिच दशा । उपरिष्टात् प्रतिष्ठन्ते ॥

**उच्चैरुच्चे ॥ ४१ ॥**

उच्चैश्चरतु चिरम् ॥

**नीचैरवाङधोऽधस्तान्न्यङ् नीचे ॥ ४२ ॥**

नीचैः शंस । अवाङ्मुखः । अधोगङ्गा । अधस्तादद्रेः । न्यक्कृतः ॥

**अवश्यं नियमे ॥ ४३ ॥**

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः ॥

**साम्यर्धे ॥ ४४ ॥**

सामि सम्मीलिताक्षी ॥

---

1. मातृकायां आन्ध्रलिप्यां अत्र ह्रस्वैकारघटितलेखनं विद्यते ॥

**साचि तिर्यगर्थे ॥ ४५ ॥**

साचिलोचनयमं (?) नमयन्ती ॥

**अन्वगानुषगानुकूल्ये ॥ ४६ ॥**

अन्वगास्ते । तृणन्ति बर्हिरानुषक् । आनुकूल्येन दर्भैः छादयन्तीत्यर्थः ॥

**प्राध्वं निग्रहे च ॥ ४७ ॥**

निग्रहे—प्राध्वमङ्गानि साहसात् । निगृहीतान्यङ्गानीत्यर्थः । गतिप्रतिरूपकोऽयम् । आनुकूल्ये—प्राध्वं कुरुध्वं बुधाः ॥

**साक्षात् प्रत्यक्षे ॥ ४८ ॥**

साक्षात्कृतधर्माणो विबुधाः ॥

**प्रमीं विषु विष्वक् समन्तात् समन्ततः परितः सर्वतोऽर्थे ॥ ४९ ॥**

प्रमीमादित्योऽसृजत् । सर्वत आदित्योऽसृजदित्यर्थः । विषु अञ्चति=विष्वङ् । विष्वगञ्चति=विष्वद्र्यङ् । समन्ताद्भवः सामन्तः । समन्ततो धावति । परितः प्रपतन्ति दुष्कृतां विपदः ॥

**उभयतोऽभितोऽभिमुखे च ॥ ५० ॥**

उभयतो ग्रामं वसति । आयान्तमभितः कान्तम् । सर्वतः संमुखं चेत्यर्थः ॥

**मुहुरसकृदभीक्ष्णं पौनःपुन्ये ॥ ५१ ॥**

कान्तां मुहुर्ध्यायति । असकृत् समरे जितः । अभीक्ष्णमास्फालयतीभकुम्भम् ॥

**ज्योग् दीर्घायुष्ट्वे ॥ ५२ ॥**

ज्योङ्नदन्तः पूर्णकामाश्चरेम ॥

**हिरुग् हिंसायाम् ॥ ५३ ॥**

हिरु(र?)गव्रतो हैरुकः ॥

**ईषदल्पे ॥ ५४ ॥**

ईषच्चौरः ॥

**मनागनुशये च ॥ ५५ ॥**

अनुशये—मनाङ् न भ्रष्टोऽस्मि । अल्पे—मनाग्वादी ॥

**शनैर्मान्द्ये ॥ ५६ ॥**

शनैर्याति पिपीलकः ॥

**बलात् प्रसह्य बहलं हठे ॥ ५७ ॥**

अहो बलात्कारः । प्रसह्यघाती । आर्य! बहलं गृह्णाति । हठात् कण्ठाश्लेषीति हेतौ ङसिः ॥

**आराद्दूरान्तिकयोः ॥ ५८ ॥**

दूरे—आराद्यातः । अन्तिके—रसं प्रीतां स्थापयेदारात् (?) ॥

**प्रायः प्रायेण बाहुल्ये ॥ ५९ ॥**

प्रायः प्रत्ययमादत्ते । प्रायेण सामग्र्यविधौ गुणानाम् ॥

**युगपदेकपदेप्रबाहुक् तुल्यकाले ॥ ६० ॥**

युगपद् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् । अयमेकपदे तया वियोगः । प्रबाहुग् बहवो गताः । तुल्यकालं, समकालं, तत्कालमेककालमिति क्रियाविशेषणम् ॥

**सपद्यह्नाय तत्क्षणे ॥ ६१ ॥**

सपदि दहत्युपेक्षितो वह्निः । अह्नाय सा नियमजम् ॥

**उपांश्वप्रकाशे ॥ ६२ ॥**

उपांशु स्याच्छतगुण उपांशुदण्डः ॥

**तूष्णीमवाचि ॥ ६३ ॥**

तूष्णीमास्ते ॥

**जोषं सुखे च ॥ ६४ ॥**

सुखे—जोषं जितेन्द्रियः । अवाचि—जोषमुपास्महे ॥

**तिरोऽन्तर्धानतिरश्चोः ॥ ६५ ॥**

अन्तर्धौ—तिरोभूताः । तिरश्चि—तिरः काष्ठं कुरुष्व ॥

**स्वयमात्म(नोऽक्षे ?)नेत्यर्थे ॥ ६६ ॥**

स्वयमागतः ॥

**कु कुत्साल्पयोः॥ ६७ ॥**

कुत्सितो ब्रह्मा = कुब्रह्मा । ईषदुष्णम् = कोष्णम् ॥

**उपष्टु दुष्टु दुष्टे ॥ ६८ ॥**

उपष्टुकारी (कोहि पश्यति दुर्जनः?) पिशुनदौष्टवम् ॥

**काममनुमतौ ॥ ६९ ॥**

कामं क्षाम्यतु यः क्षमी ॥

**निकामं प्रकामं सुष्ठु बलवदतीवाऽत्यर्थे॥ ७० ॥**

निकामं क्षामाङ्गी । प्रकाममप्रोयत । सुष्ठु खल्विदमुच्यते । बलवच्छ्रान्तोऽसि । अतीव क्षुत्पिपासितः ॥

**सु, शु, वन्व, षाट्, प्याट्, प्रशंसायां च ॥ ७१ ॥**

सुमुखम् । शुनासीरः । वन्व हं असि सूर्य (?) षाट् श्रव्यं पठति । प्याट् पार्वती गायतु मङ्गलानि । अत्यर्थे—अभिशुनसखीनाम् (?) शु = प्रशस्तम्—अश्नुते = श्वशुरः । शुनासीरः ॥

**वरं हीनोत्कर्षे ॥ ७२ ॥**

वरं कूपशताद्वापी ॥

**परं केवलं किन्त्वेकार्थे ॥ ७३ ॥**

किन्त्वर्थे—भाव्योऽसौ मूर्खः परम् । केवलं कर्मवैचित्र्यात् जानन्नपि विमुह्यति । एकार्थे—धर्मः सखा परमहो परलोकयाने । न केवलं यो महतोऽपभाषते ॥

**चिरं चिराय चिररात्राय चिरस्य चिरे ॥ ७४ ॥**

चिरंजीवी । चिरन्तनः । चिराय निर्धनो भूत्वा । चिररात्राय यजते । चिरस्य बत लब्धासि । चिराच्चिरेणेति नामनी ॥

**तत्त्वं व्यक्तौ ॥ ७५ ॥**

तत्त्वं मूर्खोऽयम् । व्यक्तं स्फुटमिति क्रियाविशेषणम् ॥

**पुरस्तात् पुरतोऽग्रतोऽग्रे ॥ ७६ ॥**

पुरस्तात् सेनानीर्याति । तदेत्यर्कः पुरस्तात् । पुरतस्त्वरितो याति । प्रसरतां यात्यग्रतः केसरी च ॥

**पुरः पूजायां च ॥ ७७ ॥**

पूजायाम्—पुरस्कृतः । अग्रे—पुरो याति ॥

**अच्छाऽभिमुखे ॥ ७८ ॥**

अच्छ स्वच्छो भव । अच्छभल्लः । गतिप्रतिरूपकोऽयम् ॥

**प्रादुराविः प्रकाशे ॥ ७९ ॥**

प्रादुष्प्रभावः । आविष्कृतः । गतिप्रतिरूपकौ चैतौ संभवत एव । प्रादुर्भूतमधोक्षजम् । आविर्भूतः ॥

**वरिवः परिचर्यायाम् ॥ ८० ॥**

वरिवस्कृणोतु । परिचरत्वित्यर्थः । वरिवस्यति गुरून् ॥

**सहसा आकस्मिकाऽविमर्शयोः ॥ ८१ ॥**

आकस्मिके—शि(वः?)रः प्रसूनं सहसा पपात । अविमर्शे—सहसा विदधीत न क्रियाम् ॥

**शश्वत्, सनत्, सना, नित्यदा, सदिति नित्ये ॥ ८२ ॥**

शश्वदकरोत् । सनत् कुमारः । सना श्रवणशीर्षते सनाशभिः (?) । सनातनः । राधेयो नित्यदा दाता । सदिति मन्त्रिणः शुचयः । नित्यं सततमजस्र-

मनिशमिति क्रियाविशेषणमनास्तादिक्त। एवं युक्तं स्नातुम्। अनन्तरं गतः। निश्चितं मूर्खोऽयम्। भीमस्तरस्वी भृशम्। अत्यर्थं तनुः। साधु दृष्टं यद्दृष्टव्यम्॥

**नमोऽर्चादौ ॥ ८३ ॥**

नमो देवेभ्यः। विष्णवे दीपो नमः। दीपं निवेदयामीत्यर्थः॥

**श्रौषड्, वौषड्, वषड्, वड्, ऋषड्, देवेट्, स्वाहा हविर्दाने ॥ ८४ ॥**

अस्तु श्रौषट्। हीही वौषट्। वषडिन्द्राय तस्मै स्वाहा। वट् ताभ्यः स्वाहा। (वषड् ऋषड् देवेट् ?) अप्सुषदेवेट्। अग्नये स्वाहा॥

**हन्त भिक्षादाने ॥ ८५ ॥**

मनुष्याणां हन्त हन्ततिः। भूरियं हन्तकारः॥

**स्वधा तृप्तौ ॥ ८६ ॥**

पितृभ्यः स्वधा। प्रीतिस्तृप्तिफला॥

**स्वस्त्यविनाशे ॥ ८७ ॥**

स्वस्ति प्रजाभ्यः॥

**कंबडन्तःकरणे ॥ ८८ ॥**

कंबड् शुद्धिः। हल्लाभ इत्यर्थः। आभिमुख्येऽप्याहुः। कंब(डखो?) धावति॥

**सपदिविद्रुवमेतर्हिसंप्रतीदानीमधुना सांप्रते ॥ ८९ ॥**

सपदि दहत्युपेक्षितो वह्निः। विद्रुतोऽसौ विद्रुवम्। एतर्हि बर्हिणां कालः। संप्रत्यसांप्रतं वक्तुम्। तमधुना मधुनानिति तं हृदि (?)। असंप्रतीति नञ्समासोऽव्ययीभावो वा॥

**धिङ् निन्दाभर्त्सनयोः ॥ ९० ॥**

निन्दायाम्—धिक् तार्किकान्। भर्त्सने—धिग् जाल्म॥

**ऋते विनाऽन्यत्र वर्जने ॥ ९१ ॥**

ऋते कृशानोर्नहि मन्त्रपूतम्। विना वातं विना वर्षम्। अरोगिभावादन्यत्र॥

**अन्तरेणान्तरा मध्ये च ॥ ९२ ॥**

मध्ये—यतो भवन्तमन्तरेणान्यथाऽन्यदा भूपतिर्ग्राहितः । अन्तरा त्वां च मां च कमण्डलुः । वर्जने—अन्तरेण पुरुषकारं न किंचित् सिध्यति । त्वामन्तरा तामृतमनसा यथाक्षि (?) ॥

**पृथङ् नाना भेदे च ॥ ९३ ॥**

भेदे—पृथग् वादाः । नानारूपा इत्यर्थः । वर्जने—तेभ्यः पृथक् । नाना नारीर्निष्फला लोकयात्राः । स्त्रीर्विनेत्यर्थः । अपृथग्यत्ननिष्पन्न इति नञा ॥

**अन्यद्विशेषे ॥ ९४ ॥**

चौरो गतः । अन्यत् किमास्ताम् । अन्यच्च (?) ।

**कुवित् प्रशंसाभूत्योः ॥ ९५ ॥**

प्रशंसायाम्—कुवित् (सुनोग?) इष्टये । भूतौ — कुविदङ्गाय वसन्तः । समृद्धायाङ्गायेत्यर्थः ॥

**हडुत्तारणे ॥ ९६ ॥**

हुं हट् प्रतिहतोऽसि ॥

**अदाश्चर्ये ॥ ९७ ॥**

अद्भुतमिदम् । अदि भुवो डुतच् ( उणादिसूत्रमिदम् ) ॥

**शं प्रतिग्रहे ॥ ९८ ॥**

गां शं करोति ॥

**स्वरिति प्रीतौ ॥ ९९ ॥**

आज्येन तनूनपात् स्वरिति । प्रीयत इत्यर्थः ॥

**स्वगा निष्क्रये ॥ १०० ॥**

स्वगा सन्त्वृत्विजः । निष्क्रीताः सन्त्वित्यर्थः ॥

**जातु खेदामर्षसंभावनानिश्चयकदाचिदर्थे ॥ १०१ ॥**

खेदे— न जात्वहं भुञ्जे । अमर्षे — न जात्वस्य सुकृतमस्ति । संभावना-

याम्—शूद्रं को जातु याजयेत् । निश्चये—को जातु युध्यतेऽर्जुनेन । कदाचिदर्थे—न जातु कामः कामानामुपभोगेन शाम्यति ॥ कारणोपदेशेऽपि—अत एव स्वस्थो न जातु बहुभुक् ॥

## पुत् कुत्सायाम् ॥ १०२ ॥

पुत् कामः । पुद्गलः । पुगित्येके । (दिष्ट्या वर्धसे?)

## मर्याः सीमबन्धे ॥ १०३ ॥

मर्या दीयते = मर्यादा ॥

## आदहारम्भहिंसाकुत्सासु ॥ १०४ ॥

आरम्भे—आदह भक्तस्य भोजनाय । हिंसायाम्—आदहारीन्पुरन्दरः । हिनस्तीत्यर्थः । कुत्सायाम्—ऊर्यादहयति करिष्यसि । (?)

## आदङ्क निन्दाविनाशयोः ॥ १०५ ॥

निन्दायाम्—भुङ्क्ष्वादङ्क तृप्तः (?) । विनाशे—आदङ्क क्षीरं दधिभावाय॥

## कूं खुं गुं घुं कीं शीं द्वेषे ॥ १०६ ॥

कूं मूर्ख । कीं (काटप्राणि?) शीं (शाक्यायाम्?)

अनव्ययस्य अव्यय(स्य?) त्वेन भवनमव्ययीभावः । समा (स्त्यैवा?) स्त्यैवाव्ययम् । अभावः सूकराणां निःसूकरं वर्तते । समृद्धिर्भिक्षाणां सुभिक्षम् ॥

व्यक्ताऽव्यक्तवर्णपदवाक्यानुकरणम् । पि पि प्रिये! सु सु सुरां मु मु मुखासवं देहि । गवित्ययमाह । क्रोधं प्रभो ! संहर संहरेति । अव्यक्तानुकरणम्—चीत् करोति याति च । चटच्चटिति चर्मणि च्छमिति (चौच्छलच्छोणिते?) चोच्छलच्छोणिते ॥

बीजकूटमालामन्त्राः । बीजं चतुष्कादि । कूटो नवात्मादि । मालामन्त्रः कुरुकुल्लाभोरुण्डादिः । शुष्काक्षराण्यपि मालामन्त्रत्वात् । रूं दुं रूं दुं दिङ्ले दिङ्ले जम्बूकवर्जित जगति यति किनिकिचाङ्क ॥

[1] तोसुन् कसुनेजन्तम् । भावलक्षणे स्थेणकृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् । ( पाणिनिसूत्रम् । ३-४-१६ ) । पुरा सूर्यस्योदेतो राधेयः । सृपितृदोः कसुन् । (३-४-१७) । पुरा क्रूरस्य विसृपो विरप्शिन् । कृत्यार्थे तवैकेन् केन्यत्वनः । (३-४-१४) । नम्लेच्छितवै नापभाषितवै । दृशे विश्वाय सूर्यम् । आमन्तम् । कास्प्रत्ययादाममन्त्रे लिटि । (३-१-३५) । कासांचक्रे । चिकीर्षामास । क्त्वा, ल्यप्, तुमुन्, णमुल्, खमुञन्तम् । क्त्वा—समानकर्तृकयोः पूर्वकाले । (३-४-२१) । भुक्त्वा गतः । ल्यप्—समासेऽनञ्पूर्वे क्त्वो ल्यप् । (७-१-३७) । पलाय्य गतः । तुमुन्—तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । (३-३-१०) । भोक्तुं याति । णमुल्—आभीक्ष्ण्ये णमुल्च । (३-४-२२) । पायंपायं पिब बहु पयः । निमूलसमूलयोः कषः । (३-४-३४) । समूलकाषं कषति । खमुञ्—कर्मण्याक्रोशे कृञः खमुञ् । (३-४-२५) । चौरङ्कारमाक्रोशति ॥

तसिल्, ह, त्रल्, दा, अधुना, दानीं, र्हिल्, थाल्, धा, ध्यमुञ्, धमुञ्, शस्, च्वि, डाच्, साति, त्रा, कृत्वसुच्, सुच्, तरां, तमां, वति, ना, नाञ्, अस्तात्यर्थाः, सद्य आदयः ॥

पञ्चम्यास्तसिल् । (५-३-७) । सर्वतः । आद्यादिभ्यश्च । (वचनम् ) । आदितः । मध्यतः । इदमो हः । (५-३-११) । इह । कुह । सप्तम्यास्त्रल् । (५ ३-१०) । तत्र । किंयत्तदः काले दा । (५-३-१५) । सर्वदा । यदा । तदा । कदा । अस्मिन् काले = अधुना । दानीम् । तदो दा च । (५-३-१९) । तदानीम् । अनद्यतने र्हिल् । (५-३-२१) । कस्मिन् काले = कर्हि । यर्हि । प्रकारवचने थाल् । (५-३-२३) । तथा । सर्वथा । संख्याया विधार्थे धा । (५-३-४२) । एकेन प्रकारेण एकधा । षोढा । एकाद् धो ध्यमुञन्यतरस्याम् । (५-३-४४) । ऐकध्यम् । द्वित्र्योश्च धमुञ् । (५-३-४५) । द्वैधम् । द्विधा च । त्रैधम् । त्रिधा । (धश्चत्रेधा?) एधाच्च । (५-३-४६) । त्रेधा । बह्वल्पार्थात् शस् कारकात् (५-४-४२) । अल्पशः । अभूततद्भावे च्विः । (५-४-५०) । शुक्लीभवति । अव्यक्तानुकर-

1. अत्र मातृकायां लेखनमतीव संकीर्णम् । अतः विविच्य ससङ्गति लिखितम् । न काऽपि कल्पना कृतेति विभावनीयम् ॥

णात् .... .... अनितौ डाच् । (५-४-५६) । पटपटाकरोति । विभाषा साति कात्स्न्ये । (५-४-५२) । भस्मसात् करोति । देये त्राच । (५-४-५५) । देवत्रा करोति । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । (५-४-१७) । बहून् वारान् बहुकृत्वो भुङ्क्ते । द्वित्रिचतुर्भ्यः सुच् । (५-४-१८) । द्विः भुङ्क्ते । (एकात्?) एकस्य सकृच्च । (५-४-१९) । एकवारम् = सकृद्भुङ्क्ते । किंतराम् । वक्तितमाम् । सुतराम् । तेन तुल्यं क्रियाचेद्वतिः । (५-१-११५) । ब्राह्मणवदास्ते । विनञ्भ्यां नानाञौ नसह । (५-२-२७) । विना वातम् । नाना चैत्रम् । अस्तात्यर्थाः । दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः । (५-३-२७) । पूर्वस्यां दिशि, देशे, कालेवा = पुरस्ताद्रम्यम् । अधस्तात् । दक्षिणोत्तराभ्यामतसुच् । (५-३-२८) । दक्षिणतो वसति । विभाषा परावराभ्याम् । (५-३-२९) । परतः । परस्तात् । अवरतः । अवरस्मात् । अञ्चेर्लुक् । (५-३-३०) । प्राक् । प्रत्यक् । उपर्युपरिष्टात् । (५-३)३१) । ऊर्ध्वायां दिशि देशे काले वा = उपरि वसति । पश्चात् परस्यां दिशि । (पूर्वपदस्यचापरस्य पश्चात् । ?) दक्षिणपश्चात् । उत्तरपश्चात् । पश्च पश्चाच च्छन्दसि । (५-३-३३) । पुरो व्याघ्र एव ते पश्च सिंहः । पश्चा सिंहः । उत्तराधरदक्षिणादातिः । (५-३-३४) । उत्तराद्वसति । अधरात् । दक्षिणात् । दक्षिणतः । दक्षिणादाच् । (५-३-३६) । दक्षिणा वसति । आहिच दूरे । (५-३-३७) दक्षिणाहि वसति । उत्तराच्च । (५-३-३८) । उत्तराहि वसति । पूर्वाधरावराणामसिपुरधवश्चैषाम् । (५-३-३९) । पुरः । अधः । अस्तातिच । (५-३-४०) । पुरस्तात् । अधस्तात् । विभाषाऽवरस्य (५-३-४१) । अवरस्तात् । अवस्तात् । समानेऽह्नि = सद्यः । (पतितं मांसेन । ?) अस्मिन् = अद्य । पूर्वादौ—पूर्वेद्युरन्येद्यु, रन्यतरेद्यु, रितरेद्यु, रपरेद्यु, रधरेद्यु, रुभयेद्यु, रुत्तरेद्युः ॥ उभयोरह्नोः उभयेद्युः श्राद्धं कुर्यात् । परेद्यवि ग्रामं गन्ता । वर्षेऽस्मिन् = ऐषमः । पूर्वे वर्षे = परुत् । परुद्भवः पटुरासीत् , पटुतमश्चैषमः । परारि(त्रं) घृतं पुण्यम् ।

इति निपाताव्ययोपसर्गवृत्तौ (तिलककृतायां),

द्वितीयमव्ययकाण्डम् ॥

श्रीः

॥ श्रीः ॥

श्रीगुरवे नमः ॥

# ॥ तृतीयमुपसर्गकाण्डम् ॥



[1] प्रपरा .... .... .... सूदभ .... .... प्रतिपक्ष .... अनन्तरक्रिया .... .... .... ॥

प्रादिकर्मण्युपरमे दिग्योगैश्वर्यजन्मसु ।
नर्मप्रेम्णोः प्रकर्षेऽग्रे ज्ञाने प्रसवभूषणे ॥ १ ॥

दोषे नियोगेऽवसरे सेवासाहसशुद्धिषु ।
उपयोगे प्रकथनेऽनवधानबहुत्वयोः ॥ २ ॥

माने हिंसाशास्त्रनाम्नोर्वञ्चनार्थविपर्यये ।

"प्र" इत्ययमुपसर्गः आदिकर्मादिषु वृत्तः स्वार्थबलाद्धात्वर्थं बाधते, अनुवर्तते, विशिनष्टिवा । धातोरेव वा अनेकार्थस्य ससोऽर्थः उपसर्गैर्द्योत्यते । तत्रादिक्रियायाम्—प्रक्रमते भोक्तुम् । वाक्यं प्रस्तौति । प्रारब्धं दक्षिणेन = प्रदक्षिणम् । प्रारभते कर्तुम् । प्रकृतः कटः चैत्रः । (?) प्रवर्तते ॥ उपरमे—प्रान्तेन धीयते = प्रधिः; उपरताभातिस्म । (?) प्रभाता रात्रिः । प्रगतःपितामहः = प्रपितामहः । [2] सन्ध्या .... .... उपरतिरेव । प्रव्रजति । (प्रैति, प्रतिष्ठते, स्वप्रेऽत एव । प्रलयं गतः । सुप्त इत्यर्थः । ?) दिग्योगे—प्राची–दिक् । प्राक्–देशः कालोवा । ऐश्वर्ये—प्रभुर्देशस्य । प्रभवति गवां प्रत्यानेतुं स एव धनंजयः । जन्मनि—हिमवतो गङ्गा प्रभवति । बीजादङ्कुरः प्रवर्तते । नर्मणि—प्रहसति । प्रेम्णि—प्रीत्या नयः = प्रणयः । प्रकर्षे—प्रतपति । प्रगल्भते । प्रविशति । प्रकाशते । प्रवर्धते ।

---

1. काण्डस्यास्य आदावेव, मातृकायामेवंरीत्या लेखनं वर्तते ॥ अत्राऽपि ग्रन्थपातः संभूतः स्यात् । लुप्तश्च भागः केवलमुपसर्गस्वरूपनिरूपकश्लोकात्मक एव भवेदिति प्रकरणेन मन्यामहे ॥ 2. अत्राऽपि ग्रन्थपातः ॥

प्रचिनोति । प्रशंसति । प्रकुप्यते । (श?) प्रार्थयते । प्रणम्य । प्रणिपत्य । प्रसक्तः । प्रजातः । प्रयच्छति । दाण् = दाने । यमेरर्थापहारोऽत्र । प्रसिद्धेनापहृतत्वात् । अग्रे—अग्रं हस्तस्य = प्रहस्तः । प्रपदम् । पादाग्रमित्यर्थः । ज्ञाने—(वताच्छन्दसि तस्याऽप्याहुः ?) । (प्रकर्षेण गुप्तो धीयः ?) प्रणिधिः = चरः । अत्वरायां प्रकर्षेणैव सिद्धम् । प्रबद्धं वक्ति । ध्यानेऽप्ययम् । प्रध्यायाति = स्मरति — प्रात्यम् । प्रसवो गर्भग्रहणम । पुरोवातो गाः प्रवाययति । भूषणे—प्रसाधयति । दोपे—प्रलपति । नियोगे—प्रयुङ्क्ते । प्रोषितः । प्रहितः । अवसरे—प्रस्तावः । सेवायाम्—नृपं प्रकुरुते । सेवत इत्यर्थः । साहसे—पराचाराम् प्रकुरुते । तेषु सहसा वर्तते इत्यर्थः । शुद्धौ प्रसीदति । प्रसन्नः । उपयोगे—शतं प्रकुरुते । व्ययीकरोतीत्यर्थः । प्रकथने—जनवादान् प्रकुरुते । प्रवक्ति । प्रवादः । अनवधाने—प्र(सा?)माद्यति । प्रस्मरति । बहुत्वे—प्रभूतम् । प्रचुरम् । प्रबलम् । प्रकीर्णो देशः । माने—प्रदेशः (प्रादेशः?) । प्रस्थः । प्रकामः (?) हिंसायाम्—प्रहरति । प्रवासयति । प्रमापयति । शास्त्रनाम्नि—प्रक्रिया । प्रकरणम् । मुख्येऽपि । प्रधानम् । प्रवरः । वञ्चने—प्रलम्भयति । विप्रलम्भः । प्रतारिताः । अर्थवैपरीत्ये—प्रतिष्ठते = गच्छतीत्यर्थः । प्रवसति । (प्रपूरयति । ?) देशे रूढेः सिद्धम् । प्रणतो देशः ॥

परा भृशेऽनाभिमुख्ये त्वराभिभवविक्रमे ॥ ३ ॥
प्रशान्तावप्रसहने धर्षणे ([1] विद्रुते) ऋषौ ।

भृशे—पराहन्ति । पराजितः । पौनः पुन्यं भृशार्थ एव । वज्रं परामृशति । अनाभिमुख्ये—परागच्छति । परावृत्तः । पराञ्चति । पराङ्मुखः । त्वरायाम्—परापतति । अयमहं परागत एव । अभिभवे—पराभवति । पराकृतः । विक्रमे—पराक्रमति । प्रशान्तौ—परैति । परेतः । अप्रसहने—अध्ययनात् पराजयते । सोढुं न शक्नोतीत्यर्थः । धर्षणे—प्रसभं पराधृष्टः । विद्रवे—पलायते । ऋषौ—पराशरः॥

अपोऽन्यथात्वे विश्लेषे ह्रासोद्घाटनवारणे ॥ ४ ॥
ईप्साव्यावृत्त्यनुत्कर्षन्यकारोत्प्राशमुक्तिषु ।

---

1. विद्रवे, इति पाठः स्यात् ॥

प्रतिदानव्याजदोषद्रोहनिह्नवखेलने ॥ ५ ॥
चौर्यनिर्देशपूजासु वैकृत्यांशे विपर्यये ।

अन्यथात्वे—अपवर्तते । विश्लेषे—अपैति । अपवाहयति । अपयुज्यते । ह्रासे—अपचयः । अपसर्पति । अपसरति । उद्घाटने—अपवृत्तं द्वारम् । वारणे—अपहृतं पापम् । प्रेयान् सायमपाकृतः सशपथम् । ईप्सायाम्—अपेक्षते । व्यावृत्तौ—अपोहते । अपयाति । अनुत्कर्षे—अपकृष्टः । न्यक्कारे—अपक्षिपति । अपविद्धः । अपध्वस्तः । उत्प्राशे—अपहसति । मुक्तौ—अपवर्गः । अपवृज्यते । प्रतिदाने—अपायते ऋणम् । व्याजे—अपदेशः । दोषे—अपध्यायति । अपसरति । अपभाषा । अपवादः । द्रोहे—अपराध्यति । अपकारः । निह्नवे—अपह्नुते । अपलपति । अपजानीते । खेलने—अपस्किरते ऋषभो हृष्टः । चौर्ये—अपहरति । निर्देशे—अपदिशति । पूजायाम्—अपचितो विष्णुः । वैकृत्ये—अपस्कीर्णमुखः । अंशे—अपस्करो रथाङ्गम् । विपर्यये—अपमृत्युः । अपद्वारम् । अपनयः । अपसव्यगतः । ( दानाद्यप्रसिद्धम् ? ) वर्जने कर्मप्रवचनीयः । अपसाकेताद् वृष्टो देवः ।

संसम्यक्त्वे समन्तत्वे श्लेषे कूजनवर्तने ॥ ६ ॥
सहभावे स्मृतौ क्रोधे वृद्धिवाचिकढौकने ।
अनिश्चये गुणाधानप्रतिज्ञात्यागसेवने ॥ ७ ॥
क्रियान्तोद्योगनियमे विमर्शगणनाक्षये ।
नैकव्येऽनुकृतौ प्रीतौ स्वीकारोत्पत्तिवर्जने ॥ ८ ॥
आभिमुख्ये परिचये कालेऽल्पपरिहारयोः ।

सम्यक्त्वे—संप्रयच्छति । संस्मृतीप्साभृशसत्येष्वत एव । संवरयति । संरक्तः । संजानाति धर्मम् । समन्तत्वे—संपतन्ति सैन्याः । सम्राट् । संख्यातः । श्लेषे—संधत्ते । संयोगः । समवैति । संबध्नाति । संभेदः । सङ्क्रमः । सङ्घट्टः । सङ्घटते । कूजने—संक्रीडन्ति शकटानि । वर्तने—( संपाति ? ) प्रास्थिकी

शाली । (?) सहभावे—संहन्यते = सङ्घः । संभूय यानम् । संस्पर्धः प्रमाणानाम् । रतनु संप्रवदन्ति कुक्कुटाः । सङ्करः । संसर्गः । संकेतः । स्मृतौ—समाधत्ते । संकल्पः । ज्ञानम् । क्रोधे—संरभते । सन्तापः । वृद्धौ—संपत् । संभारः । संबध्यति । चिके—संदिशति । ढौकने—समाहरति । समूहते । संक्षिपति । संघटयति । वृतं द्वारम् । संकुचति । भाण्डानि समाचिनोति = संभाण्डयते । अनिश्चये—दिग्धे । संशेते । गुणाधाने—संस्करोति । समालभते । संमार्ष्टि । भूषणेऽत व । शरीरसंस्कारः । प्रतिज्ञायाम—संजानीते । संगिरते । संशृणोति । त्यागे—न्यस्यति । समावर्तते । सेवने—संवाहयति । क्रियान्ते—( संतिष्ठते ? ) समाप्तिः। योगे—(सभनज्ञति?) नियमे — संयमः । मर्यादा नियम एव । संस्था । विमर्शे—पृच्छते । संमूर्तः । संप्रधारयति । संमन्त्रयति । गणनायाम्—संख्याति । संचष्टे । कलयति । क्षये—संहरति । मरणेऽत एव । संस्थितः । संज्ञापनम् । नैकट्ये—क्रान्तिः । संनिकृष्टः । संनिहितः । समीपम् । अनुकृतौ—संकाशते । पद्मसं-शः । संवदति । संनिभाति । संनिभा । वाहीको गोसंस्थानः । विष्णोः संस्था । क्रुतिरित्यर्थः । प्रीतौ—संभाषते । स्वीकरणे—संगृह्णाति । चीवराणि समार्ज-ति = संचीवरयते भिक्षुः । उत्पत्तौ—गर्भः संभवति । वर्जने—संचक्ष्याः खलाः । चष्टे । (?) आभिमुख्ये—संमुखः । समेति । परिचये—संस्तवः । संपृच्छते । ले—समयः । अल्पे—समर्घः । परिहारे—अत्र समाधीयते रम्यत्वशुद्धी अप्र-द्धे । संस्कृता कन्या । संस्कृता आपः ॥

अनु पश्चात् कृपाज्ञानसांत्वने सेवनेच्छयोः ॥ ९ ॥
सादृश्याचरणप्रश्नादेशाङ्गीकृतमार्गणे ।
प्रोत्साहनेचानुकूल्ये पश्चात्तापानुपूर्व्ययोः ॥ १० ॥
प्रसाधनेचोपकारे सातत्यालोचनान्वये ।

पश्चादर्थे—अनुसरति । अनुचरः । कृपायाम्—अनुशोचति । अनुक्रोशः । ने—अनुभवति । अनुमतम् । अनुमानम् । सान्त्वने—अनुनयति । अनुकूल-ति । अनुलोमः । सेवने—अन्वास्ते । अनुजीवी । इच्छायाम्—अनुरोधः ।

सादृश्ये—अनुहरति । अनुकरोति । अनुकल्पते । अनुरूपः । आचरणे—अनुष्ठानम् । अनुतिष्ठति । प्रश्ने—अनुयुङ्क्ते । अनुजिज्ञासते । आदेशे—अनुशास्ति । अनुज्ञा । अधीष्टेऽत एव । इन्द्रायानुब्रूहि । अनुवाकः । (अनुचरः ?) अङ्गीकृतौ—अनुमोदते । अनुवर्गः । अनुज्ञातः । मार्गणे—अन्विष्यति । प्रोत्साहने—होतेऽनुगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः । आनुकूल्ये—अनुवर्तते । अनुकूलः । अनुलोमः । अनुरक्तः । पश्चात्तापे—अनुशेते । अनुशयः । आनुपूर्व्ये—अनुक्रामति । प्रसाधने—चन्दनेनानुलिम्पति । उपकारे—अनुगृह्णाति । अनुकल्पते । सातत्ये—अनुबध्नाति । अनुस्मृतिः । आलोचने—अन्वीक्षते । अनुसंधत्ते । अन्वये—अनुषजति पदार्थानान्तरः कोऽपि हेतुः । अनुगता आपो यत्र = अनूपो देशः । लक्षणादौ कर्मप्रवचनीयः । लक्षणे—अनुवनमशनिर्गतः । इत्थंभूताख्याने—साधुश्चैत्रो मातरमनु । भागे—यदासामनु स्यात् तद्दीयताम् । वीप्सायाम्—वृक्षं वृक्षमनुसिञ्चति । सहार्थे—नदीमन्ववसिता सेना । नद्यासह संबद्धेत्यर्थः । हेतौ—शाकल्यस्य संहितामनु प्रावर्षत् । हीने—अन्वर्जुनं योद्धारः । अर्जुनाद्धीना इत्यर्थः । सामीप्यायामसादृश्यपश्चादर्थेऽव्ययम् । अनुशोणं पाटलिपुत्रम् । अनुगङ्गं वाराणसी । अनुरूपं सुरूपो वहति । मुनिं कणादमन्वतः ॥

अव क्रोधे बोधरोधे धैर्यालम्बनभूषणे ॥ ११ ॥
न्यग्भावाभिभवादानभोजने श्लेषवर्णने ।
दर्पैकाग्र्यक्लृप्तसेवाप्रहासालोकशुद्धिषु ॥ १२ ॥
अनुत्साहप्रसाराज्ञावेलासंहतिखण्डने ।
सामीप्येषद्व्याप्तिदेशदंशशङ्कनमिश्रणे ॥ १३ ॥

क्रोधे—अवख्याति । अवदष्टे (?) बोधे—अवस्यति । अवैति । अवगतम् । रोधे—अवगृह्णाति । अवग्रहः । अवरोधः । धैर्ये—अवष्टम्भः । अवस्तृणाति । आलम्बने—अवलम्बते । अवष्टभ्नाति । भूषणे—अवतंसयति । न्यग्भावे—अवपतति । अवनमति । अवाक् । अभिभवे—अवमन्यते । अवजानाति । अवक्षिपति । आदाने—अवचिनोति । अवलुम्पति । भोजने—अवक्ष्णाति । अवदंशः ।

श्लेषे—अवगूहनम् । अवगाहः । धर्षणे—अवस्कन्दति । अवमर्दः । दर्पे—अवलिप्यते । ऐकाग्र्ये—अवधत्ते । अवधारयति । क्रयके—अवक्रीणीते । अवक्रयः । सेवायाम्—अवलगति । अवसज्यते । प्रहासे—अवस्तनोति । अवहेलयति । आलोके—अवलोकयते । शुद्धौ—अवदातः । अनुत्साहे—अवसीदयति । अवहीयते । अवकर्षति । आज्ञायाम्—अवसृजति । अववदति । अववादः । वेलायाम्—अवसरति । अवसरः । अवतरति । संहृतौ—अवहारः । [1] .... .... शाली प्रस्थमवहरति । हानावत एव । अवपुष्पस्तरुः । खण्डने—अवदानः । अवद्यति । सामीप्ये—अवष्टब्धमेव । अविदूर इत्यर्थः । ईषदर्थे—शुना अवलीढम् । व्याप्तौ—श्वा अवकीर्णः पांसुभिः । अवाप्तोऽर्थः । अवकाशः । वर्चस्क एवाऽवस्करः । दशायाम्—अवस्था । आशङ्कने—अवदिशति (वैद्य ?) जयेन । मिश्रणे—काशेन अवदधाति मांसम् । वचनक्रियाभूशाद्यप्रसिद्धम् ॥

**निःपृथक्करणे खेदे बहिष्कृत्याग्रहे भृशे ।**
**भोगेऽधिश्रयणे शान्तावन्तर्धानपदार्थयोः ॥ १४ ॥**

**आविष्करणसंपत्त्योर्वियोगे दर्शने सुखे ।**

पृथक्करणे—निवारयति । निष्कासयति । खेदे—निर्विद्यते । निस्सङ्गते । बहिष्करणे—निर्गरति । निर्गच्छति । निष्ठीवति । निःशिङ्घति । निरस्यति । निष्क्रान्तः । आग्रहे—निर्बन्धः । निर्बध्नाति । भृशे—निष्पतति । निर्दग्धः । निरीक्षते । निर्जितः । निर्वृष्टः । भोगे—निर्वेशः । निर्विशति । अधिश्रयणे—आग्नेयमष्टाकपालं चरुं निर्वपेत् । शान्तौ—दीपो निर्याति । निर्याणम् । [2] .... अन्वगाख्याने[3]—निर्वक्ति । निर्वदति । संपत्तौ—निर्वृत्तः । निर्वाहः । (निस्तक्षति । ?) निष्पत्तिः । निर्मितः । वियोगे—निर्मुक्तः शल्येन = निः शल्यः । निरामयः । दर्शने—निर्दिष्टमासनं भेजे । सौख्ये—निर्वृतिः । निर्वाणम् । अभावेऽव्ययम् । अभावो मक्षिकानाम् = निर्मक्षिकम् ॥

**दुरीषदर्थे निन्दायां कृच्छ्राऽनीप्सितवैकृते ॥ १५ ॥**

---

1. अत्राऽपि ग्रन्थपातः ॥ 2 अत्र अन्तर्धान, पदार्थ, आविष्करणरूपेषु अर्थेषु उदाहरणानि मातृकायां न सन्ति । अतोऽयमपि ग्रन्थपात एव ॥ 3. श्लोके अनुद्दिष्टः अर्थः ॥

ईषदर्थे—दुर्बलः । कुत्सने—दुश्शर्म । कृच्छ्रे—दुष्पानः । दुर्गतिः । अनीप्सिते—दुर्भगः । दुष्कृतम् । वैकृते—दुर्मुखः । असंपत्त्यादावव्ययम् । असंपद् भिक्षाणाम् = दुर्भिक्षं वर्तते ॥

**वि विशेषेऽत्यये व्याप्तौ परिवर्ते विपर्यये ।**
**निवृत्तिपृथुताव्याजव्याख्यानाश्वासभोजने ॥ १६ ॥**
**विरोधप्रैषपर्यायक्रियाक्रीडनवण्टने ।**
**रोधोद्वाहक्लेशदूरशौर्योद्योगनिशामने ॥ १७ ॥**
**दानेऽन्यथात्वे नानात्वे नाशाश्चर्योक्तिमिश्रणे ।**
**भेदशिक्षामोहमुख्यविचारासंमुखे व्यये ॥ १८ ॥**

विशेषे—विराजते । विहसति । विशिनष्टि । अत्यये—विभाति । विभावरी = रजनी । विवासयति । व्यभ्रं नभः । व्याप्तौ—विभवति । विभुः । व्याप्नोति । विष्कम्भते । परिवर्ते—विनिमयते । विक्रिणीते । क्रियापरिवर्तेऽपि । व्यतिलुनीते । व्यतिहारः । विपर्यये—विरज्यति । विस्मरति । निवृत्तौ—विरमति । विश्राम्यति । पृथुत्वे—विकसति । विस्तीर्णम् । आस्यं व्याददाति । व्याजे—व्यपदिशति । व्यंसयति । व्याख्याने—व्याचष्टे । व्याकरोति । विवृणोति । व्यनक्ति । आश्वासे—विश्वसिति । विस्रंभते । भोजने—विदशति । विष्वणति । विरोधे—विरुध्यते । विगृह्णाति । विराधयति । व्युत्थानम् । (विभावते ?) विप्रतिपद्यते । विदधति । विरूपः । प्रैषे—विसृजति । व्यादिशति । पर्याये—नृपं विशेते । क्रमेण सेवत इत्यर्थः । तवाद्य राजन् विशायः । क्रियायाम्—विदधाति । विनिर्मिमीते । क्रीडने—विहरति । विलसति । वण्टने—विभजति । रोधे—विबध्नाति । विलम्बते । विधारयति । विष्कम्भः । उद्वाहे — विवहति । क्लेशे — विषीदति । विद्राति । विषादः । विद्रवः । । दूरे—विप्रकृष्टः । व्यवदधाति । व्यवहितः । विश्लेषेऽत एव । वियुज्यते । वियौति । व्यतिरिच्यते । शौर्ये—विक्रामति । उद्योगे—व्यवस्यति । व्यवसायः । विचेष्टते । व्यापारेऽप्यत एव । व्यायच्छति । व्यवहरति । निशामने—विज्ञापयति । दाने—वितरति । विश्राणयति । अन्य-

थात्वे—विपरिणमते । विवर्तते । नानात्वे—विकल्पते । व्यूहति । विचरति । विचित्रम् । नाशे--विलीयते । विप्लवते । विपत्तिः । व्यतिरेकः । विकुरुते । विकारः । व्यतिचरति । विरोगः । विदस्तः । आश्चर्ये—विस्मयते । उक्तौ—व्याहरति । विरौति । विशब्दयति । मिश्रणे—व्यवैति । व्यतिजपति । व्यतिकीर्यते । भेदे—मन्त्रविस्रावः । (शिखायाम् ?) शिक्षायाम्—विद्याविनीतः । व्युत्पन्नः । विदग्धः । विदहति । मोहे—विभ्रान्तः । विचितः । मुख्ये—विशिष्टः । विचारे—विवेदयति । विविक्तः । विमृशति । विचिनोति । विचारयति । असंमुखे—विमुखः । व्यये—शतं विनयते । संज्ञायां यथाकथञ्चित् । विष्किरः = शकुनिर्विकिरोवा । वृक्षासनयोर्विष्टरः । विष्टारपङ्क्तिःछन्दः ॥

आङाभिमुख्ये करणे ग्रहणे श्लेषधर्षणे ।
क्रान्तौ शापाधानकांक्षानिषेधप्रह्वतावधे ॥ १९ ॥

विस्रंभेऽभिविधौ बन्धे स्पर्धानिर्देशभूषणे ।
संप्रदाये पारतन्त्र्ये स्नाने संस्थानदैर्घ्ययोः ॥ २० ॥

विज्ञानेऽङ्गीकृतौ त्यागे उत्कण्ठावृत्तिभोजने ।
स्थानाश्मानश्रमाह्वाननैकट्ये कालयापने ॥ २१ ॥

स्पर्शावष्टम्भोपरमे भृशे कृच्छ्रादिकर्मणोः ।

आभिमुख्ये—आनीतः । आयाति । करणे—आवहति । आचरति । ग्रहणे—आगृह्णीते । आदत्ते । आच्छिनत्ति । आसादयति । आपद्यते । श्लेषे—आलिङ्गति । आश्लिष्यति । धर्षणे—आस्कन्दति । आमृशति । आधर्षयति । क्रान्तौ—आरोहति । आवसति । आतिष्ठति । आक्रामति । आवृतः । शापे—आक्रोशति । आक्षारयति । आधाने—आवपति । आस्थापयति । आधत्ते । काङ्क्षायाम्—आशास्ते । आशंसा । आकाङ्क्षति । निषेधे—आक्षिपति । आगूरते । आकाशते । आकाशम् । प्रह्वत्वे—आवर्जयति । आनतः । आञ्चति । दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः । वधे— पशुमालभेत । विस्रम्भे—आश्वसिति । अभिविधौ—आविशति । आच्छादयति । आवृणोति । बन्धे—अमुक्तकञ्चुकः ।

आमुञ्चति । आलयति । (?) स्पर्धायाम्—मल्लो मल्लमाह्वयते । निर्देशे—आज्ञप्तः । आज्ञा । भूषणे—आभ्रियते = आभरणम् । आकल्पः । संप्रदाये—आमनन्ति । आम्नायः । पारतन्त्र्ये—आयतते । आयत्तः । स्नाने—आप्लवते । संस्थाने—आक्रियते = आकृतिः । दैर्घ्ये—आयच्छते । आयामः । आयतिः कालदैर्घ्यम् । विज्ञाने—आभाति । आभासते । अङ्गीकृतौ—आशृणोति गाम् । त्यागे—आपृच्छते गुरुम् । उत्कण्ठायाम्—आतनुते प्रियम् । आवृत्तौ—आसूत्रयति । आवर्तते । भोजने—आहरति । आहारः । स्थाने—आध्रियते—आधारः । आधीयते । आध्माने—आनह्यति । आनाहः । आपूर्यते । श्रमे—आयस्यति । आह्वाने—आमान्त्रयति । आकारयते । नैकट्ये—आसादयति । आसन्नः । कालयापने—आगमयस्व भावम् । कंचित् कालं प्रतीक्षस्वेत्यर्थः । स्पर्शे—गामालभ्य । अवष्टम्भे—आलम्बते । उपरमे—आनमति । भृशे—आभाषते । आस्रवः । आस्रावयति । कृच्छ्रे—( आम्नुः ? ) आपत् । आदिकर्मणि—आरभते । मर्यादाभिविध्योः कर्मप्रवचनीयः । आस्तुन्नात् । ईषदर्थादावव्ययम् । आ —उष्णम् = ओष्णम् । विस्मयप्रतिष्ठयोः रूढः । आश्चर्यमनित्ये । आस्पदं प्रतिष्ठायाम् ॥

नि न्यग्भावे गुप्तदाने स्वभावस्वापनिग्रहे ॥ २२ ॥
श्रुतिव्यावृत्त्यवस्थाने कथनाधानयन्त्रणे ।
तेजने कारणे राशौ कौशलाज्ञान्तनाशने ॥ २३ ॥
श्राद्धे परीक्षोपवेशे रते साम्येऽक्ष्ण्यनन्तरे ।
परिवर्ते भृशे लेशे बन्धे स्वदृष्टिकेतने ॥ २४ ॥

न्यग्भावे—निहन्यते । निमज्जति । न्यञ्चति । निपतति । निकृष्टः । निकृष्यते । न्युब्जं पात्रम् । गुप्तदाने—निक्षिपति । निधत्ते । उपनिधिः । न्यासः । निखनति । स्वभावे—निसृज्यते – निसर्गः । स्वापे—निद्राति । निग्रहे—निकारः । निकरोति । निगृहीतः । श्रुतौ—निशाम्यति । व्यावृत्तौ—निवर्तते । निवृष्टो मेघः । अवस्थाने—निविशते – निवेशः । निलीयते । निवसति । निकेतः । कथने—निर्दिशति । आधाने—निषिञ्चति । निषेकः । यन्त्रणे—

नियच्छति । निवदति । नियमः । नियम्वयति । तेजने—निनश्यति । निशानयति । निकृषः । कारणे—निधत्ते । निधानम् । नियच्छति । (?) राशौ—निचिनोति । निचितः । कौशले—निष्णातः । निपुणः । आज्ञायाम्—निदेशः । निसृष्टः । नियुक्तः । अन्ते—निष्ठा । निष्ठितः क्रतुः । नाशने—निहन्ति । निषूदयति । निमूलयति । निधनम् । निबर्हणम् । श्राद्धे—निवपति । निवापः । परीक्षायाम्—निकषयति । निरूपयति । उपवेशने—निषीदति । रते—निधुवति । निधुवनम् । साम्ये—शशिनिकाशः । निकाशते । निभाति । पद्मनिभः । [1] .... ... .... निमेषः । निमिषति । निमीलति । अनन्तरे—निकटः । निकटति । संनिकृष्टः । परिवर्ते—नियमते (?).... .... ....ते । तिलैर्माषान् नियच्छति । भृशे—निरतः । निसृतः । निकीर्यते । निकरः । लेशे—निहुसति (?) बन्धे—निबध्नाति । .... .... .... .... .... ॥

अधि स्वाम्याधिक्यनिन्दाभिचारे स्मृतिपाठयोः ।
पाकारम्भे प्रहसने प्रेरणोपरिभावयोः ॥ २५ ॥
स्वीकारे विनियोगे च लाभे सन्तानसंमुखे ।
ज्ञानप्रस्तावयोः —

स्वाम्ये—अध्यास्ते । अधितिष्ठति । अधिपः । आधिक्ये—अधीष्टे । अध्याहारः । निन्दायाम् .... .... .... । अभिचारे—अधिचरति । स्मृतौ—अध्येति । पाठे—अधीते । पाकारम्भे—अधिश्रिणीते । अधिश्रयते । प्रहसने .... .... .... .... चक्रे तमभिबभूव । तेन वाजित इत्यर्थः । प्रेरणे—अध्येषति । अध्येषणा । अधीष्टम् । उपरिभावे—अधिशेते । अध्यश्नाति । अध्यशनम् । भुक्तस्योपरि भोजनम् । अध्यस्यति । अधिवसति । अधिरोहति । अधिविन्दति । अधिकारः । परिभवेऽत एव । शत्रूनधिशेरते । स्वीकारे—अध्यवस्यति । विनियोगे—अधिकृतस्य कर्तृत्वं न कर्तुरधिकारः । लाभे—धत्ते (?) समधियच्छन्ति । सन्ताने—अधिसृजति शरान् । साम्मुख्ये—अध्यक्षणोः =

---

1. "..........." एवं विहिते सर्वत्र ईषत् ग्रन्थपातोऽजनि इति विभावनीयम् ॥

अध्यक्षः । अध्यक्षं प्रमाणम् । अधिमुखः । ज्ञाने—परं ब्रह्माऽधिगच्छति । अधिगतपरमार्थान् पण्डितान् मावमंस्थाः । प्रस्तावे—शब्दानुशासनमधिक्रियते । ऐश्वर्यादौ कर्मप्रवचनीयः । अधिप्रजासु राजा । अधिराज्ञि प्रजाः । सामीप्ये निपातः । अध्यधिग्रामम् ॥

— बन्धस्थगनोपगमेष्वपि ॥ २६ ॥

बन्धे—अपिनह्यति । पिनद्धः । अधिग्रहो बन्ध एव । अपि गृह्यते । स्थगने—पिधत्ते । पिहितः । उपगमे—अथेतरे दुःखमेवापियन्ति । पदार्थादौ कर्मप्रवचनीयः । अप्रयुक्तपदस्यार्थे— सर्पिषोऽपि स्यात् । मात्रा स्तोकं वा । संभावनायाम्—राजंस्त्वमपि वर्तसे । अपेक्षा .... .... .... रत एव । अपि गृह्णीयां वेदम् । अपि नस्सकुले भूयात । गर्हायाम्—अपि सिञ्चेत् पलाण्डुम् । अन्ववसर्गे—अपि सिञ्च । अपि स्तुहि । यथेच्छं कुर्वित्यर्थः । समुच्चये—अपि सिञ्च । अपि स्तुहि । सिञ्च च स्तुहिचेत्यर्थः । प्रश्नबाढार्थादौ निपातः । अपि क्रियार्थं सुलभं समित्कुशम् । बाढार्थे—अपि कुर्याम् । समुच्चये—शुकमपि सारणमपि ॥

अत्युल्लङ्घननिर्वाहानर्थातिशयवञ्चने ।
अन्यधर्मप्रापणानुज्ञानेऽन्तर्भावभूतयोः ॥ २७ ॥

उल्लङ्घने—अतिक्रामति । अतिवर्तते । अतिपतति वेलाम् । अतिपद्यते । अतिचरति । निर्वाहे—अतिवाहयति । अतिगमयति । अनर्थे—अत्ययः । अत्याहितम् । अतिशये—अतिशेते । अतिव्याप्तिः । अतिषिञ्चति । अत्याधानम् । वञ्चने—अतिसंधत्ते । अन्यधर्मप्रापणे—अतिदेशः । अतिदिशति । अनुज्ञाने—अतिसृजति । अन्तर्भावे—अतिगच्छति नृपम् । भूते—अतीतः । पूजातिक्रमणयोः कर्मप्रवचनीयः । अतिस्तुतम् । सर्वान् गुणानेष गुणोऽति भाति । भृशादौ गतिः । अतिवृद्धः ॥

सु सौष्ठवाकृच्छ्रगन्धे -

सौष्ठवे—सुष्ठु मनस्वी भवति = सुमनायते । सुबद्धम् । अकृच्छ्रे—सुकरो घटः । सुपानं पयः । गन्धे—सुरभते = सुरभिः । सुरभितम् । पूजायां कर्मप्रवच-

नीयः । सुसिक्तम् । सुस्तुतम् । सुषिक्तं सुष्टुतमिति सौष्ठवे । ( अतिशयशोभनत्वे? ) समृद्धिर्मद्राणां सुमद्रम् ॥

– उज्जन्मोच्चैस्त्वभूषणे ।

**तर्कोर्ध्वापेक्षणोद्योगविवाहत्याग......... ॥ २८ ॥**

**विनाशकथनाभ्यासविपर्यास ( विलोचने ? ) ।**

**हिंसौत्सुक्य (¹पदा ?) शंसासूयामाध्यस्थ्यसाहसे ॥ २९ ॥**

**प्राबल्यतृप्तिनिर्देशदिग्योगे व्रतनिर्गमे ।**

जन्मनि—उत्पद्यते । उद्भवति । उदेति । धनमुत्तिष्ठति ग्रामात् । उच्चैस्त्वे—उद्भ्रान्तः । ऊष्मायति । .... .... .... .... भूषणे—उत्तंसयति । तर्के—उल्लिखति । उन्नयति । उत्प्रेक्षते । उत्पश्यति । ऊर्ध्वे—उदेति । (उद्गुणः?) .... .... .... उत्तरति । उड्डीयते । उच्चरति । उत्क्षिपति । उद्वर्तयति । उल्लङ्घयति । ( उत्कुदुकः? ) अपेक्षणे—उदीक्षते । .... .... .... .... उद्यमः । उत्थाय । विवाहे—उद्वहति । उद्वाहः । त्यागे—उच्छिनष्टि । उच्चारः । उच्छिष्टम् । उत्सृजति । .... .... उत्सेधति । उत्करः । विनाशे—उत्सीदति । उत्सन्नम् । कथने—उद्दिशति । उदीरयति । उच्चरते । उदाहरति । उद्घाटयति । अभ्यासे—उल्लसति । उद्भासते । विपर्यासे—उद्वर्तते । उद्वस्यते (?) उद्वेल्लति । उद्वलति । अर्थविपर्ययेऽत एव । उन्मज्जति । उन्नमति । उद्वसति । उद्वेष्टितः । उन्मूर्च्छति । उद्गिरति । उल्लेखने—उल्लिखति । उल्लेखः । उत्किरति । हिंसायाम्—उन्नाटयति । उत्क्राथयति । उज्जासयति । औत्सुक्ये—उत्कण्ठते । ( ²उपादाय? उत्कोशयति । उत्कोशः । ? ) प्रशंसायाम्—उत्कर्षः । उत्कृषते । उत्सवः । ³सूचने—उत्कुरुते वाग्भिः । माध्यस्थ्ये—उदास्ते । उदासीनः । साहसे—उत्कुरुते कन्याम् । सहसा कामयते कन्यामित्यर्थः । प्राबल्ये—उल्बणः क्रमः । उल्वण इति पृषोदरादित्वात् । तृप्तौ—उत्कृतोऽन्नेन । निर्देशे—उद्दि-

1. "क्योपदा" इति पाठे संगतिः स्यात् । 2. "उपदायाम्—उत्कोचः । उत्कोच इति" । इति पाठो युक्तः स्यात् । 3. श्लोके तादृद्यमर्थो नोपात्तः । तत्रोपात्तस्य क्रमप्राप्तस्य, असूयारूपस्यात्र उदाहरणं नास्ति ॥

श्यते। दिग्योगे—(उदीदीव?) उदग्-देशः कालो वा। व्रतनिर्गमे—उदीक्षणम्। परादौ निपातितः। उत्तरोऽस्मात्। उत्तमः॥"

अभ्याग्रहोक्तिसांमुख्योदयाङ्गीकारवन्दने ॥ ३० ॥

कामनाभोजनाभ्यङ्गाऽभितोऽर्थेऽनुकृतौ स्मृतौ।
न्यक्काराम्नायनैकट्यपेशलत्ववशीकृतौ ॥ ३१ ॥

आग्रहे—अभिनिविशते। उक्तौ—अभिधत्ते। अभिधेयम्। साम्मुख्ये—अभिसरति। अभियाति। उदये—अभ्युदेति। अङ्गीकारे—अभ्युपगच्छति। वन्दने—अभिवादयति। कामनायाम्—अभिलषति। अभोप्सति। भोजने—अभ्यवहरति। अभ्यङ्गे—अभ्यनक्ति। अभितोऽर्थे—अभिद्रवति। अभ्युक्षति। अभिनयति। अभिनवः। अभिरतः। अभिमृषति। अभिष्यन्दः। अभिनन्दति। अनुकृतौ—अभिनयति। स्मृतौ—अभिजानाति। अभिसंधत्ते। अभिध्यायति। न्यक्कारे—अभिभवति। आम्नाये—अभ्यस्यति। नैकट्ये—अभ्याशः। पेशलत्वे—अभिजातः। वशीकारे—(अभिजायेति?)। कर्मप्रवचनीयोऽन्यत्र। लक्षणे—वृक्षमभि विद्योतते विद्युत्। इत्थंभूताख्याने—शोभनश्चैत्रो मातरमभि। वीप्सायाम्—वृक्षं वृक्षमभिसिञ्चति। (अप्रसिद्ध अभ्याख्यातम्?)॥

प्रति स्थाने विनिमये निषेधे प्रतिपालने।
निवृत्त्यङ्गीकृतिज्ञानप्रतीपोत्साहनिष्क्रये॥ ॥ ३२ ॥

यत्नप्रतिज्ञासंक्षेपवैपरीत्ये भृशे दृशि।
सादृश्यभ्रंशदिग्योगव्याप्तिसंभावनारुजि ॥ ३३ ॥

स्थाने—प्रतिष्ठा। प्रतिवसति। विनिमये—प्रतिददाति। प्रतिदानम्। प्रतियच्छति। निषेधे—प्रतिषिध्यति। प्रत्याचष्टे। प्रत्यादिशति। (प्रतीहारः?) प्रतिपालने—प्रतीक्षते। निवृत्तौ—प्रत्यागतः। प्रतिनिवर्तते। प्रत्यावृत्तः। अङ्गीकारे—प्रतिगृह्णाति। प्रतीच्छति। ज्ञाने—प्रत्येति। प्रत्ययः। प्रतिभाति। प्रतीयते। प्रतिपद्यते। प्रतिभासः। प्रतीपे—प्रतिकूलम्। प्रत्यभिजानाति।

प्रत्यवबुध्यते । प्रत्युपकारः । प्रतियुध्यते । उत्साहे—होत्रे प्रतिगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः । निष्क्रये—प्रतियातयति । प्रतिमुञ्चति । प्रत्युपकारः । यत्ने—प्रतिविधत्ते । प्रतिकरोति । प्रतिज्ञायाम्—प्रतिजानीते । संक्षेपे—प्रत्याहरति । प्रत्याहारः । वैपरीत्ये—प्रत्यवतिष्ठते । प्रत्युपहरति । प्रत्यर्थयते । प्रत्यूहति । प्रत्यूहः । प्रतिबध्नाति । प्रतिकूलः । प्रतिलोमः । भृशे—(प्रतिहरः । उपमङ्गलम् ?) प्रतिगताक्षम्—प्रत्यक्षम् । प्रतियाचते । दर्शने—प्रतिकाशते । प्रतीकाशः । सादृश्ये—प्रतिनिधिः । प्रतिकृतिः । भ्रंशे—प्रतिकीर्णमुखः । दिग्योगे—प्रतीची । प्रत्यग् देशःकालो वा । व्याप्तौ—प्रतिकीर्णं पांसुभिः । संभावनायाम्—प्रत्याययति । रुजि—(प्रतिज्ञया कृतस्य पिता प्रतिसीनः ?) लक्षणादौ कर्मप्रवचनीयः । लक्षणे—वृक्षं प्रति विद्योतते विद्युत् । इत्थंभूताख्याने—साधुश्चैत्रो मातरं प्रति । भागे—यदत्र मां प्रति स्यात् । वीप्सायाम् — वृक्षं वृक्षं प्रतिसिञ्चति । अभिमन्युरर्जुनतः प्रतीति, प्रतिनिधौ । प्रतिदाने—माषानस्मै तिलेभ्यः प्रतियच्छति ॥

**पर्युद्वाहे समन्तत्वे विवर्ते वर्जने शुचि ।**
**निन्दाव्यवस्थान्यक्कारनर्मालिङ्गननिर्गमे ॥ ३४ ॥**

**क्रमभूषानिवसने क्षिपानिश्चयवेष्टने ।**
**सेवासंन्यासापवर्तशक्तिसाङ्गत्यलाघवे ॥ ३५ ॥**

**परिज्ञाने विनिमये विस्तारव्याप्त्यतिक्रमे ।**

उद्वाहे—परिणयति । समन्तत्वे—परिपूर्णः । परिष्कृतः । परिभ्रमयति । परिक्रामयति । परित्रायते । परिधिः । परिष्वक्ते । विवर्ते—परिणमते । वर्जने—परिहरति । परिवर्जनम् । शोके—परिदेवनम् । निन्दायाम्—परिचष्टे । परिवदति । व्यवस्थायाम्—परिभाषते । न्यक्कारे—परिभवति । नर्मणि—परिहसति । आलिङ्गने—परिष्वजते । परिरभते । परिगृह्णते । निर्गमे—परिवहति । परिवाहः । क्रमे—परिपटति । परिपाटी । पर्येति । पर्यायः । परीयते । भूषायाम्—परिष्करोति कन्याम् । निवसने—परिधत्ते । क्षिपायाम्—[1] .... .... .... ....

1. ग्रन्थपातः । निश्चय, वेष्टन, सेवारूपेष्वर्थेषु उदाहरणानि लुप्तानि ॥

.... .... .... परिचरति । परिस्कन्दति । संन्यासे—परिव्रजति । परिव्राट् । अपवर्तने—(पर्यवस्यति । पर्याभवति ?) शक्तौ—पर्याप्नोति । पर्याप्तः । परिबृंहति । परिकल्पते । साङ्गत्ये—परिचिनोति । परिचयः । लाघवे—परिप्लवते । परिज्ञाने—परीक्षते । विनिमये—परिवर्तते । विस्तारे—पर्यास्तीर्यते । परिणह्यति । परिणाहः । व्याप्तौ—परिवेष्टि । परिवेशः । (क्षुधापरीहः ?) अतिक्रमे—परिवृत्तमहः । लक्षणादौ कर्मप्रवचनीयः । लक्षणे—वृक्षं परि विद्योतते विद्युत् । इत्थंभूताख्याने—शोभनश्चैवो मातरं परि । भागे—यदत्र मां परि स्यात् । वीप्सायम्—वृक्षं वृक्षं परिसिञ्चति । वर्जने—परि त्रिगर्तेभ्यो वृष्टो देवः । आनर्थक्येऽव्ययम् । अविच्युतं परि ॥

उप सामीप्यदाक्षिण्यप्रजनारम्भभेदने ॥ ३६ ॥

उत्कोचाराधने ज्ञानावज्ञाप्रस्तावशिक्षणे ।
भोगाभोजनसादृश्यभूषालिङ्गनगर्हणे ॥ ३७ ॥

सान्त्वनानुग्रहत्यागापकारे यज्ञकर्मणि ।
यत्नच्छायारहोभाषाविरामोद्वाहलेपने ॥ ३८ ॥

औद्धत्येऽङ्गीकृतौ युक्तावाचान्तावासने बलौ ।
लिप्सासंपर्कगुह्येषु भृशाध्याहारवैकृते ॥ ३९ ॥

सामीप्ये—उपढौकते । उपयाति । उपनमति । उपसर्पति । उपनयते । उपसन्नः । उपगृह्णाति । दाक्षिण्ये—(उपरुच्यते ?) प्रजने—उपसर्या गौः । गर्भग्रहणप्राप्तकालेत्यर्थः । आरम्भे—उपक्रमते । उपजानाति । उपज्ञा । भेदने—उपजपति । उपजापः । उपधा । उत्कोचे—उपचरति । उपदा । उपयच्छति । उपप्रदानम् । आराधने—उपतिष्ठते सूर्यम् । उपस्तौति । ज्ञाने—उपलभते । अवज्ञायाम्—उपेक्षते । उपहसति । प्रस्तावे—उपक्षिपति । उपन्यस्यति । उपोद्घारः । शिक्षणे—उपशिक्षा । उपदिशति । भोगे—उपभुङ्क्ते । अभोजने—उपवासः । सादृश्ये—उपमिमीते । उपमा । भूषायाम्—कन्यामुपस्कुरुते । आलि-

ने—उपगूहति । उपसृज्यते । उपसृजति । गर्हणे—उपलभते । सान्त्वने—
र्मकरानुपवदते । उपसंभाषते । अनुग्रहे—उपरुध्यत । उपकरोति । त्यागे—
उपेक्षते । अपकारे—उपहन्ति । उपद्रवः । उपद्रवति । यज्ञकर्मणि—उपाक-
ोति पशुम् । वेदस्य उपाकर्म । प्रतियत्ने—काण्डगुणस्योपस्कुरुते । सतो गुणा-
ानं करोतीत्यर्थः । छायायाम्—उपरज्यते – उपरागः । रहोभाषणे—परदारानुप-
दते । उपसंभाषते । उपच्छन्दयति । उपमन्त्रयते । विरामे—उपरमते ।
पावर्तते । उद्वाहे—कन्यामुपयच्छते । लेपने—उपलिम्पति । उपदेग्धि । उप-
चिनोति । औद्धत्ये—उपप्लवते । अङ्गीकृतौ—उपेत्य । उपगच्छति । अभ्युप-
मः । युक्तौ—उपपद्यते । आचान्तौ—उपस्पृशति । आसने—उपविशति ।
ौ—उपहरति । उपहारः । लिप्सायाम्—उपयाचते । सम्पर्के—रथिकान्
तिष्ठते । उपसृजति । भक्तकरः लवणेनोपसृजति मांसम् । गुह्ये—उपह्वरः ।
शे—उपक्षीणः । उपरुणद्धि । उपनिरोधः । उपस्कीर्य लुनाति । भृशंविक्षिप्ये-
र्थः । उपसंपन्नं सस्यम् । अध्याहारे—उपस्कृतं वाक्यम् । वैकृते—उपस्कृतः ।
.... .... .... .... अंशोऽपि वैकृतम् । उपस्कीर्णमुखः । हीनादौ कर्म-
चनीयः । उपार्जुनं योद्धारः । उपरा ( धायाद्रोणः ? ) धेयं द्रोणः ॥

**गतयः प्रसिद्धाः ॥**

---

तद्यथा—उपसर्गाः क्रियायोगे । गतिश्च । प्रकृत्य । उपेत्य ॥

[1] ऊर्यादिच्विडाचश्च ॥ ऊरीकृत्य .... .... । शुक्लीभूय । पटपटाकृत्य । .... .... ऊरी उररी विस्तारेऽङ्गीकारेच ॥

कारिका—श्रौषड्वौषड्वषट्स्वाहास्वधाप्रादुरश .... .... विशः । ( अलाष्टी-
ालीकेवालीसंसूचाचकेवाची ? ) ( सर्पालीवर्षालीअंचकलास्तं .... .... शकला
कलाज्ञाध्वंसकलौ हिंसायां कापि वान्दाली । शुक्ली .... .... .... हली हलू-

---

1. इत आरभ्य यावत्का डान्तं पदे पदे ग्रन्थपाताः वर्तन्ते । संशयग्रस्तत्वात् विमर्शा-
वाच्च ते परिष्कारं विना तथैव विसृष्टाः ॥

विकारे सजूः सहार्थे स्यात्। माधुर्ये ध्वंसार्थे पाम्पी स्यात् गुलुगुधात्तपीडार्थे। ताला-ताली धूमी चेतालीचेति विस्मृतौ कान्तौ॥?)

अनुकरणं चाऽनितिपरम्॥ (पा. सू. १-४-६२) खाट् कृत्य॥

आदरानादरयोः सदसती॥ (१-४-६३) सत्कृत्य। असत्कृत्य॥

भूषणेऽलम्॥ (१-४-६४) अलङ्कृत्य॥

अन्तरपरिग्रहे॥ (१-४-६५) अन्तर्भूय॥

कणेमनसी श्रद्धाप्रतीघाते॥ (१-४-६६) कणेहत्य पयःपिबति। मनोहत्य। आतृप्ति पिबतीत्यर्थः॥

पुरोऽव्ययम्॥ (१-४-६७) पुरस्कृत्य॥

अस्तं च॥ (१-४-६८) अस्तं गत्य॥

अच्छ गत्यर्थवदेषु॥ (१-४-६९) अच्छेति आभिमुख्यार्थेऽव्ययम्। अच्छगत्य। अच्छोद्य॥

अदोऽनुपदेशे॥ (१-४-७०) अदः कृत्याध्यापयति॥

तिरोन्तर्धौ॥ (१-४-७१) तिरोभूय। तिरोधाय। दुर्बलमाधा-यैति .... .... .... ॥

साक्षात्प्रभृतीनि च॥ (१-४-७४) असाक्षात् साक्षात् संपद्य साक्षा-कृत्य। साक्षात्कृत्वा॥ (मिथ्याचिन्ता .... .... दा .... .... .... लोचना ात्वा .... .... .... प्राजर्या प्राजरुहा वीजर्या स्यात् परश्च वीजरुहा। अर्थे वणमथोष्णं संसर्गाशीतमुदकमुग्रं च। अग्नौविशे विकपनाविम्पने विहसने प्रथ-ने च प्रादुर्वशे असहने नम आविर्मान्ततादिवृत्तगतम्।?) लवणं कृत्य। अर्थे-

कृत्य ॥ अनत्याधान उरसिमनसी ॥ ( १ - ४ - ७५ ) मध्ये पदे निवचने च ॥ ( १ - ४ - ७६ ) उरसिकृत्य । अङ्गीकृत्येत्यर्थः । पक्षे—उरसि कृत्वेत्यादि ॥

नित्यं हस्ते पाणावुपयमने ॥ ( १ - ४ - ७७ ) हस्तेकृत्य । पाणौ-कृत्य । विवाह्येत्यर्थः ॥

प्राध्वं बन्धने ॥ ( १ - ४ - ७८ ) प्राध्वं कृत्य । बन्धने हेतुकम् । .... .... .... फाल्यं कृत्वेत्यर्थः ॥

जीविकोपनिषदावौपम्ये ॥ ( १ - ४ - ७९ ) जीविकाकृत्य । उपनि-कृत्य । तत्तुल्यं कृत्वेत्यर्थः ॥

श्रीः । श्रीः । श्रीः ॥

इति निपाताव्ययोपसर्गवृत्तौ उपसर्गकाण्डं तृतीयम् ॥ इति भद्रम् ॥

**भट्टक्षीरस्वाम्युत्प्रेक्षितनिपाताव्ययोपसर्गीये**

**तिलककृता वृत्तिः संपूर्णेति ।**

भद्रं पश्येम प्रचरेम भद्रमोमिति शिवम् ॥

श्रीः । श्रीः ।

॥ श्रीः ॥



श्रीः

## ॥ सूत्रानुक्रमणिका ॥



8

## ॥ श्लोकानुक्रमणिका ॥

## ॥ निपातानुक्रमणिका ॥

## ॥ अव्ययानुक्रमणिका ॥

## ॥ उपसर्गानुक्रमणिका ॥

# प्रमादपरिशोधनम्



| पृष्ठम् | पङ्क्तिः | प्रमादः | परिशुद्धम् |
|---|---|---|---|
| ६ | १५ | हिं स्तो त्रे | हिं स्तोत्रे |
| २६ | १ | परोवरंप रस्परं | परोवरं परस्परं |
| ३३ | १ | युध्यन्ेऽर्जनेन | युध्यतेऽर्जुनेन |
| ५१ | २ | उपरुध्यत | उपरुध्यते |
| ५१ | १२ | भृशंविक्षिप्ये | भृशं विक्षिप्ये |
| ५३ | ११ | योपसर्गींये | योपसर्गीये |
| ५६ | | अनुक्रमणिकायां पकारादिसूत्रविभागे "प्रातः प्रगे—पृ—२३' इतीदमनुसंधेयम् । | |

inted at Tirumalai-Tirupati Devasthanams Press, Tirupati and published by the Director, Sri Venkateswara Oriental Institute.